अहम् स्वसदस्यान् आह्वयामि । मे सदस्या: मम सकाशे आगच्छन्तु मम पृष्ठे च तिष्ठन्तु । तदा ये कवर्गस्य सदस्या: ते एव आगत्य कवर्गस्य पृष्ठे तिष्ठन्ति । सर्वप्रथमं 'क' आगत्य वदति— अहम् 'क' अस्मि । मम उच्चारणस्थानं कण्ठ: । उच्चारणं करोति 'क' अहम् अल्प्राणयुक्त: । मम सखा 'ख' महाप्राण: । तदा 'ख' आगच्छति । स: वदति अहम् 'ख' अस्मि । मम अपि उच्चारणस्थानं कण्ठ: । अहम् महाप्राण: अस्मि पुन: पुन: उच्चरति 'ख' 'ख' एवं सर्वे वर्णा: आगत्य स्वपरिचयं प्रयच्छन्ति । ते स्वं स्थानं गत्वा उपविशन्ति । इदानीम् उच्चारणस्थानानि सचित्राणि आगच्छन्ति । ये च वर्णा: तत: उच्चार्यन्ते, ते तस्य स्थानस्य समीपमागत्य स्वपरिचयं प्रपच्छन्ति । एवं वर्णानाम् परिचय: स्थायी भवति यत् छात्रा: न केवलं रटन्ति प्रत्युत स्वयं नाटकमाध्यमेन प्रत्यक्षीकुर्वन्ति ।

एवं तृतीयाविभक्तिमधिकृत्य खेलमाध्यमेन शिक्षणं कारयितुम् शक्यते । छात्रै: विविधानि प्रथमान्तपदानि/तृतीयान्तपदानि चिन्तयित्वा चिटिकासु लिख्यन्ते । तत: ते मण्डलाकारेण उपविशन्ति । एक: छात्र: उत्तिष्ठति, स कर्तृपदं उच्चारयति— मृगा: । इदानीं यस्य समीपे अस्य सम्बन्धिपदं मृगै: वर्तते सोऽपि उत्तिष्ठति । तौ धावत: । पुन: आगत्य स्वस्थानम् उपविशत: । छात्रा: सस्वरं गायन्ति—

मृगा: मृगै: साकमनुव्रजन्ति ।

एवमेव वर्गद्वये विभज्य विभक्तीनाम्, पर्यायवाचिपदानं विलोमपदानाम् अभ्यास: कारयितुम् शक्यते ।

### पठनम्

मौखिकरूपेण विभक्तीनाम् अभ्यासानन्तरम् कथं पठनकौशलस्य विकास: करणीय: इत्यपि विचार्यते । प्रायश: किं दृश्यते ? शिक्षका: स्वयं पठित्वा अनुवादं कुर्वन्ति । छात्रा: एकं शब्दमेव पठित्वा पूर्णश्लोकस्य अनुवादं स्मृत्वा परीक्षासु लिखन्ति । परन्तु पठन-अवबोध: तत्र न भवति । परन्तु यदा आदर्शपाठानन्तरं छात्रा: स्वयं प्रश्ननिर्माणं कुर्वन्ति, वर्गद्वये विभज्य प्रश्नोत्तरं कुर्वन्ति तदा स्वयमेव अर्थज्ञानं भवति । एकदा एकं पद्यम् अधिकृत्य षष्टि: प्रश्ना: छात्रै: निर्मिता: ।

(क) अन्य: अपि विधि: पठनावबोधार्थं कर्तुं शक्यते—छात्रा: वर्गेषु विभज्य एकैकं प्रश्नं निष्कास्य उत्तरं यच्छन्ति । यस्य वर्गस्य सर्वाधिकाणि उत्तराणि शुद्धाणि भवन्ति स विजयी उद्घोष्यते । एवं शिक्षकस्य भूमिका अंकप्रदानाय भवति । एतेन छात्रेषु स्वाध्यायस्य प्रवृत्ति: उत्पद्यते । एवं श्लोकानाम् पाठान् अधिकृत्य अपि यदि प्रश्नोत्तरं क्रियते छात्रै: अवबोधनं सुकरं भवति ।

### लेखनम्

सामान्यतया छात्रा: स्मरणं कृत्वा एव लिखन्ति । परीक्षाकाले ते पञ्चषान् निबन्धान् स्मृत्वा आगच्छन्ति । यदि च विषय: स एव विद्यते तर्हि शोभना: अंका: लभ्यन्ते परन्तु यदि कण्ठस्थीकृतेभ्य: विषयेभ्य: अन्य: विषय आगच्छति तदा काठिन्यं भवति । अत: तत्र केवलं स्मरणस्य परीक्षा भवति न तु भाषिकतत्त्वानाम् । अत: लेखनकार्ये प्रदत्तशब्दानाम् साहाय्येन अनुच्छेदलेखनं यदि क्रियते तर्हि ते तान् शब्दान् प्रयुज्य वाक्यनिर्माणं कृत्वा लिखितुं

पारयन्ति । एवमेव कथालेखनमपि घटनासंकेतान् पठित्वा कर्तुं शक्यते । वार्तालापे एकः पक्षः दीयते अन्यः च छात्रेण एव पूरणीयः । चित्रवर्णनम् अपि प्रदत्तसहायकशब्दसूचीमाध्यमेन कर्तुं शक्यते ।

एवं यदा सम्पूर्णं प्रश्नपत्रं संस्कृतभाषायाम् एव भवति तदा न्यूनातिन्यूनं २०० वाक्यानि संस्कृतभाषा याम् पठन्ति लिखन्ति च । एवं विद्यालयस्तरे भाषिकतत्त्वानां ज्ञानं सुखदं भवति । तत्पश्चात् ते स्वयं किमपि अध्येतुं शक्नुवन्ति । अतः मूल्यानमपि वस्तुनिष्ठं भवति । प्रश्नपत्रे चत्वारि खण्डानि भवेयुः—

**अङ्काः**

खण्डः क— अपठितस्यावबोधः १५

ख— रचनात्मकं लेखनम् २०

ग— अनुप्रयुक्तव्याकरणम् ३०

घ— पठितस्यावबोधनम् ३५

छात्रैः उत्तरमपि निर्दिष्टस्थानेषु एव लेखनीयम् । प्रायः प्रतिशब्दम् अर्धाङ्कः एकाङ्कः वा निश्चीयते । एवं मूल्याङ्कनमपि अधिकं विश्वसनीयं भवति ।

**अतः संस्कृतस्य पठनपाठने**

मनोरञ्जकगतिविधीनाम् आयोजनम् नितान्तम् आवश्यकं येन छात्राः देशस्य प्रतिष्ठाधारिणीं भाषां प्रति आकृष्टाः भवेयुः, अस्यां सञ्चितेन ज्ञानपुञ्जेन लाभान्विताः च भवेयुः ।

# त्रिभाषासूत्रं संस्कृतञ्च

डॉ. वि. एन्. चौधरी

स्वतन्त्रभारते भाषाविषये महान् विचार: समजनि । भाषासमस्याया: समाधानाय बह्व्य: समितय: भारत-सर्वकारेण सङ्घटिता: । विविधशिक्षायोगेष्वपि भाषाविषयकविचारै: सह नानाभाषासूत्राणि संस्तुतानि दृश्यन्ते । अस्मिन् क्रमे १९५६-५७ तमे वर्षे भारतसर्वकारेण संस्कृतशिक्षायोग: नियुक्त: ।

अस्य आयोगास्य अध्यक्ष: प्रसिद्धशिक्षावित् सुनीतिकुमारचट्टोपाध्याय महोदय आसीत् । आयोगस्य सदस्या: संस्कृतस्य अध्ययनं अनिवार्यविषयरूपेण कर्तव्यं इत्यनुशंसा अध्येतव्यम् अकुर्वन् ।

शिक्षाया: सर्वेषु स्तरेषु (नवीन-प्राचीनपद्धतौ च) प्राथमिक- माध्यमिक-उच्चमाध्यमिक-महाविद्यालय-विश्वविद्यालयेषु संस्कृतस्य अध्यापनस्य औचित्यं निर्धारितमभूत् ।

१. मातृ भाषा

२. हिन्दी राष्ट्रभाषा

३. संस्कृत भाषा

४. अंग्रेजी भाषा

यत्र हिन्दी मातृभाषा अस्ति तत्रैका दक्षिणभारतस्य भाषा अनिवार्यरूपेण पाठयितव्या हिन्दीप्रदेशेषु वा उत्तरभारते दक्षिणभारतस्य (तमिल्, तेलगु, कन्नड, मलयालम् आदिषु) एका भाषा पाठयितव्या । दक्षिणभारते वास्तव्या: हिन्दीभाषाया: शिक्षणं कुर्यु: तथा चोत्तरभारतस्य जना: दक्षिणभारतस्य एकस्या: भाषाया: ज्ञानं प्राप्नुयु: । संस्कृतस्य हिन्द्या: च ज्ञानं उत्तरदक्षिणप्रान्तयो: कृते समानरूपेण आवश्यकम् अस्ति ।

परन्तु सम्प्रति अस्माकं देशे त्रिभाषासूत्रे संस्कृतस्य स्थानं नास्ति ।

त्रिभाषासूत्रविषषे विभिन्नमतानामुल्लेख: अग्रे: क्रियते—

प्रथमं मतम्—

यै: संस्कृतशिक्षा अनावश्यकी हानिकारिणी च मन्यते तेषां मतेन संस्कृतम् एका क्लिष्टा भाषा अस्ति । अस्या: भाषाया: पाठ्यक्रमे निवेशनेन न कोऽपि लाभ: । एतच्च न तर्कसङ्गतं मतं, परं विद्वेषभावाभिभूतम् ।

द्वितीयं मतम्—

संस्कृतस्य अध्ययनेन जीवने गतिशीलता आयाति । संस्कृतं भारतीयभाषाणां जननी अस्ति । देशस्य एकतायै सक्षमा अस्ति । अतः प्रशासकानां शिक्षाविदां च कर्तव्यम् अस्ति यत् संस्कृतस्य अध्ययना-ध्यापनाय साध्वी व्यवस्था कर्त्तव्या । पाश्चात्त्यविद्वांसोऽपि संस्कृतं प्रति रुचिं प्रकटयन्ति । यदि भारतीयाः संस्कृतस्य उपेक्षां कुर्वन्ति तर्हि संस्कृतभाषां प्रति अन्यायो भविष्यति । तेषां मतेन यद्यपि संस्कृतं कठिना भाषा अस्ति । पाठ्यक्रमे संस्कृतस्य योजनेन छात्राणां क्लेशः अधिकः भवति । यः छात्रः इच्छति संस्कृतं पठेत् यः न इच्छसि सः न पठेत् संस्कृतस्य पठनपाठनस्य व्यवस्था वैकल्पिकी भवेत् ।

तृतीयं मतम्—

तृतीयमतस्य अवलम्बिनो विद्वांसः संस्कृतं पठ्यक्रमे अनिवार्यविषयरूपेण स्थापनीयम्— इति समर्थ-यन्ति । संस्कृतभाषा सर्वासां भारतीयानाम् आर्यभाषाणां जननी अस्ति । किञ्च संस्कृतं केवलं प्राचीनभाषा नास्ति, अपि तु इयम् आधुनिकयुगस्यापि भाषा अस्ति । संस्कृतस्य अध्ययनम् भारतीयभाषाणाम् अध्ययने सहायकं भवति । संस्कृतपाठशालासु राष्ट्रियसंस्कृतसंस्थानस्य विद्यापीठेष्वपि संस्कृतमेव शिक्षायाः माध्यमोऽस्ति । आधु-नकियुगेऽपि संस्कृतस्य देववाणी, शारदा, गाण्डीवम् इत्यादयः सप्ततिः (७०) पत्र-पत्रिकाः प्रकाशिताः भवन्ति । बहवः विद्वांसः संस्कृताध्ययनेन ज्ञातुं शक्नुवन्ति । छात्रेषु राष्ट्रिय- अन्ता-राष्ट्रिय-एकतायाः विकासाय सहायकं भवति । अतः संस्कृतस्य पठन-पाठनं माध्यमिककक्षापर्यन्तम् अनिवार्यरूपेण भवितव्यम् ।

अनेकेषु स्थानेषु संस्कृतस्य अध्ययनं निम्न (जूनियर) कक्षासु प्रारभ्यते तथा माध्यमिकस्तरस्य पाठ्यक्रमे अनिवार्यविषयरूपेण स्थानम् अस्ति ।

संस्कृतायोगेन माध्यमिकविद्यालयेषु भाषाणां शिक्षणविषये चतसृणां योजनानां विचारः कृतः—

प्रथमा योजना— १— मातृभाषा (अथवा क्षेत्रीयभाषा), २— आंगलभाषा, ३— संस्कृतभाषा (अथवा काचिदन्या प्राचीना भाषा)

द्वितीया योजना— १. मातृभाषा (अथवा क्षेत्रीयभाषा)

२. आङ्गलभाषा

३. हिन्दी भाषा (अथवा अन्यभारतीयभाषा)

४. संस्कृतभाषा

तृतीया योजना—

द्वितीययोजनाया अनुरूपमेव अस्ति । परं अस्यां योजनायां संस्कृतस्य परीक्षा न भवेत् तथा च तस्य परीक्षाफलस्योपरि अपि प्रभावः न भवेत् । किन्तु विशेष-योग्यतां प्रति छात्रवृत्ति- निर्धारणे आधारः भवेत् ।

आयोगः इमां योजनां न स्वीकृतवान् यतो हि अनया योजनया संस्कृतम् उपेक्षितं भविष्यति ।

चतुर्थी योजना—

संस्कृतस्य पाठ्यक्रमः मातृभाषायाः पाठ्यक्रमेण सह अथवा हिन्दीभाषायाः पाठ्यक्रमेण सह संयुक्त-रूपेण अनिवार्यरूपेण वा पाठयितव्यः । उत्तरोत्तर कक्ष्यासु संस्कृतं प्रति अधिकम् अवधानं दातव्यम् तथा च अस्यां भाषायाम् उत्तीर्णता अपि अनिवार्या भवेत् ।

संस्कृत- आयोगस्य अध्यक्षः श्रीसुनीतिकुमारचट्टोपाध्यायमहोदयः तथा च आयोगस्य अन्ये सदस्याः श्री सुशीलकुमारडे, श्रीहरिकृष्णदूवे, डा. राघवन्, डा. आयंगार प्रभृतयः विद्वांसः पाठ्यक्रमे संस्कृतविषयस्य पाठनम् अनिवार्यरूपेण भवितव्यम् इति संस्तुतिं कृतवन्तः ।

भारतस्य वर्तमानपरिस्थित्यनुसारं हिन्दी अस्माकं राष्ट्रियभाषा अस्ति । अतः पाठ्यक्रमे अनिवार्यविष-यरूपेण पठन-पाठनं भवितव्यम् । आंगलभाषा अन्यप्रान्तेषु एवञ्च विभिन्नदेशेषु सम्पर्कभाषा अस्ति । अतः आंगलभाषायाः महत्त्वमपि स्वीक्रियते । तथा च मातृभाषाया अध्ययनम् अपि अनिवार्यम् अस्ति ।

अतः प्रतिपादितेषु चतुर्षु मतेषु द्वितीयं मतं समीचीनं प्रतीयते । एतन्मतानुसारं संस्कृतस्य अध्ययनम् वैकल्पिकविषयरूपेण भवितव्यम् । ये छात्राः संस्कृतं प्रति आकृष्टाः सन्ति ते अस्य अध्ययनात् न वंचिताः भविष्यन्ति । तथा ये अध्ययनं कर्तुं न इच्छन्ति तेषामुपरि अनावश्यकः भारोऽपि न भविष्यति । संस्कृतस्य आधारभूतेन ज्ञानेन सर्वे परिचिताः भवेयुः । अतः न तु प्रथमाकक्ष्यातः अपि तु षष्ठी-कक्ष्यातः दशमी (माध्यमिक) कक्ष्यापर्यन्तम् अस्य अध्ययनम् अनिवार्यविषयरूपेण स्यात् ।

माध्यमिकस्तरस्य पाठ्यक्रमे अस्या स्थानं द्विविधं भवितुमर्हति । एकं तु अनिवार्यविषयरूपेण अपरं तु वैकल्पिकविषयरूपेण इति ।

अनिवार्यविषयरूपेण संस्कृतसाहित्यस्याध्ययनापेक्षया भाषाध्ययनं प्रति रुचिमद्भिः भाव्यम् । येन छात्राणां शब्दकोशे वृद्धिर्भवति । छात्राः भारतीयसंस्कृत्या परिचिताः भवेयुः संस्कृतसाहित्यं प्रति चाकृष्टाः भवेयुः । अन्येषां विषयाणां परीक्षया सह अनिवार्यरूपेण संस्कृतस्य एकं प्रश्नपत्रं पृथक् स्यात् । यत्र छात्राणाम् उत्तीर्णता अनिवार्या स्यात् । तथा संस्कृतस्य अंकाः परीक्षाफले-अपि सम्मिलिताः भवेयुः । तथा कृते सति छात्रा अध्याप-काश्च संस्कृतस्य पठनपाठने जागरूकाः भविष्यन्ति ।

भारतस्य सर्वोच्चन्यायालयः (सुप्रीमकोर्ट) ४-१०-९४ दिने स्वकीये ऐतिहासिकनिर्णये भारतसर्वकारं निर्दिष्टवान् यद् भारतस्य शिक्षा- पाठ्यक्रमे संस्कृतभाषायाः कृते न्यायोचितम् अनिवार्यं स्थानं निर्धारितं भवेत् । परं खेदस्यायं विषयः यद् इदानीं यावत् तस्य क्रियान्वयनं सुचारुरूपेण न जातम् ।

अतः संस्कृतायोगस्य संस्तुत्यानुसारं त्रिभाषासूत्रस्य स्थाने चर्तुभाषासूत्रस्य कार्यान्वयनं कर्तव्यम् । तत्र—

१. मातृभाषायाः शिक्षणम्

२. हिन्दीभाषायाः शिक्षणम्

३. आंगलभाषायाः शिक्षणम्

४. संस्कृतभाषायाः शिक्षणम्

च भवेयुः । यतो हि फ्रान्स्, जर्मनी इति पाश्चात्यदेशेषु चर्तुभाषापठनस्य व्यवस्था भवति । यदि अस्माकं देशे चर्तुभाषासूत्रं कार्यान्वितं भवेत् तर्हि—

मातृभाषायाः हिन्दीभाषायाः ज्ञाने वृद्धिः भविष्यति । तथा च उभयोः भाषयोः व्याकरणज्ञाने शब्दज्ञाने साहित्यज्ञाने च वृद्धिः भवितुमर्हति ।

अतः संस्कृता आयोगस्य चर्तुर्भाषासूत्रम् विद्यालयेषु भवितव्यम् ।

# पुराणप्रस्तुतस्य वास्तुशास्त्रस्य वैशिष्ट्यम्

प्रो. रमेशचन्द्रचतुर्वेदी

लोके साम्प्रतं वास्तुकला वास्तुविद्या, वास्तुशास्त्रमित्यादिभिर्विभिन्नाभिः संज्ञाभिः विषयविशेषस्य पौरस्त्यैः पाश्चात्यैश्च सुधीभिर्व्यापकविमर्शो विधीयतेऽस्मिन् प्रसङ्गे पौराणिकवाङ्मयप्रस्तुतं वास्तुविषयकं चिन्तनं सविशेषं समालोचनीयतां भजते। पुराण प्रस्तुते वास्तुविषयकविवेचने यद् वैशिष्ट्यं विद्यते तद्विषये विचारावसरे यानि तत्त्वानि समुपतिष्ठन्ति तेषु वास्तुनः पुरुषरूपेण समर्चनीयतानिर्देशः सर्वाधिकमहत्त्वं भजते।

**वास्तुनः पुरुषाकारता समर्चनीयता च**

वास्तुविषयिणी चर्चा पौराणिकवाङ्मये विभिन्नेषु प्रसङ्गेषु प्राप्यते, तत्र सर्वत्रैव तस्य वास्तुनः पुरुषकारता समर्चनीयता च निर्दिष्टे स्तः। एतस्मिन् विषये मत्स्यपुराणे, अग्निपुराणे, विष्णुधर्मोत्तरपुराणे च विस्तृतं विवचेनं समुपलभ्यते। तत्र मत्स्यपुराणे तु वास्तुशास्त्रोपदेशकानां प्राचीनाचार्याणां विस्तृता परम्पराऽपि निर्दिष्टा। तत्र प्रकाशितं यत् —

**भृगुरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा।**
**नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः॥**

**ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च।**
**वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती॥**

(मत्स्यपुराणम् अध्यायः — २५३, श्लोकसं. २-३)

मत्स्यपुराणे वास्तुनामकस्य जनस्य समुत्पत्तिः भगवतः शंकरस्य ललाटस्वेदसलिलात् इति प्रकाशिता। तत्रान्धकासुरस्य वधं कर्तुं समुद्यतस्य शिवस्य चरित्रं वर्णितम्। अन्धकासुरवधप्रसङ्गे शिवललाटे स्वेदोद्गमो वर्णितस्तदनु शिवललाटस्वेदाद् वास्तुपुरुषोत्पत्तिर्वर्णिता। अन्धकासुरवधप्रसङ्गो वास्तुपुरुषोत्पत्तिप्रसङ्गश्च सम्मिलितरूपेण पुराणेषु प्रकाशितौ स्तः। एतयोः प्रसङ्गयोः सम्मिलिता चर्चा सविशेषं विचारणीया विद्यते। अंधकारेण सह वास्तुसंज्ञकानां जननिवासभूतानां भवनानां कस्सम्बन्ध इत्यत्र विषये तु सूक्ष्मेक्षिकया चिन्तनं विधेयम्। तत्र वास्तुपुरुषस्य स्वरूपमित्थं वर्णितमस्ति—

**करालवदनं तस्माद्भूतमुद्भूतमुल्बणम् ।**
**ग्रसमानमिवाकाशं सप्तद्वीपां वसुन्धराम् ।।**
**ततोऽन्धकानां रुधिरमपिबत्पतितं क्षितौ ।। ६.७ ।।**

अन्धकासुरसेनानीनां रुधिरं पीत्वाऽपि तद् वास्तुसंज्ञकं महद्भूतम् क्षुधानिवृत्तिं नैवाप्नोत्, जगतीत्रयं समाक्रान्तुं प्रावर्तत, तस्माद् भीतैः देवदानवासुररक्षोभिस्तन्महद् भूतं समन्ततोऽवष्टब्धम् । तस्मिन् प्रसङ्गे देवदान-वासुररक्षसां मध्ये येन येन, यत्र यत्र महद्भूताङ्गेषु समाक्रमणं कृतं तत्रैव तस्य तस्य निवासः संजातः इति पौराणिकं कथानकम् । अस्मिन् प्रसङ्गे मत्स्यपुराणे प्रकाशितं यत्—

**येन यत्रैव चाक्रान्तं स तत्रैवावसत्पुनः ।**
**निवासात्सर्वदेवानां वास्तुरित्यभिधीयते— १४ ।।**

इत्थं हि वास्तु खलु विभिन्नदेवदानवरक्षोरगनिवासं इति निर्दिष्टम् । सर्वत्रैव पौराणिकवाङ्मये देवदा-नवादिशब्दप्रयोगेण विभिन्नानाम् अमूर्तानां भावानां मूर्तिमत्त्वं परिकल्प्यते । केषाञ्चन अमूर्तानां भावानां प्रतीक-रूपेण चर्चा विहिता इति तु पौराणिकसंस्कृतिविवेचकैः सुधीभिः बहुधा व्याख्यातम् । मूर्तिपूजा—विवेचनप्रसङ्गे तत्र विष्णुधर्मोत्तरपुराणे प्रकाशितं यत् जगद्व्यापकस्य ब्रह्मसंज्ञकस्य वास्तविकरूपेण परिचयः प्राप्तुं न शक्यते । तस्य परमेश्वरस्यालक्ष्य रूप प्रकृतिसंज्ञकं तथा च जगदात्मकं विलोकनीयं रूपं विकृतिसंज्ञकं विद्यते, तथा च पूजाध्यानादिकं साकारस्येव कर्तुं शक्यते यथाहि विष्णुधर्मोत्तरपुराणे लिखितम् —

**प्रकृतिर्विकृतिस्तस्य रूपेण परमात्मनः ।**
**अलक्ष्यं तस्य तद्रूपं प्रकृतिस्सा प्रकीर्तिता ।।**

**साकारा विकृतिर्ज्ञेया तस्य सर्वं जगत्स्मृतम् ।**
**पूजाध्यानादिकं कर्तुं साकारस्यैव शक्यते ।।**
**स्वतस्तुदेवस्याकार पूजनीयो यथाविधि ।।**

(विष्णुधर्मोत्तरपुराणे तृतीयखण्डेऽध्यायः — ४६ श्लोकसं. ३-४)

वैदिकयुगेऽपि भारतीयमनीषिणः जननिवासार्थं निर्मितानां प्रासादादीनां सर्वदेवमयत्वं ब्रह्मतत्वं बहुधा विवेचितवन्तः । तत्र ऋग्वेदे प्रस्तुतैः वास्तुसूक्तमन्त्रैः वास्तुस्वरूपविषयकं वैदिकमहर्षिचिन्तनं परिचीयते । यज्ञ-प्रधानायां वैदिकसंस्कृतौ येषां तत्त्वानां चर्चा यज्ञाङ्गरूपेण विहिता तेषां समुपबृंहणं पुराणप्रस्तुतायां साकारोपास-नाया सम्प्राप्यते । सम्भवतः 'वास्तोष्पतें इत्यादिभिर्मंत्रैः विवेचितस्य वास्तुयज्ञस्य विवेचनार्थं पुराणेषु वास्तुपुरुष-पूजाप्रकल्पिताऽस्ति, (१) मत्स्यपुराणे वास्तुपुरुषविवेचनप्रसङ्गे वास्तुसंज्ञकस्य महदाकारस्य पुरुषस्य शान्ति-विधानकर्मणः संज्ञा 'वास्तुयज्ञः' इति प्रकाशिताऽस्ति, तत्र वास्तुपुरुषविवेचनान्ते मत्स्यपुराणे विलिखितम्—

**वास्तुयज्ञः स्मृतस्तस्मात्ततः प्रभृति शान्तये ।**

मत्स्यपुराणम् अध्यायः - २५३ श्लोकसं. १९

इत्थं हि पुराणोक्तया वास्तुशास्त्रविषयकचर्चया ज्ञायते यत् खलु वेदेऽपि वास्तुनः समर्चनीयता पुरुषापि-शषरूपता च निर्दिष्टा (१) तस्याः विवेचनार्थं पुराणग्रन्थेषु पुरुषाकारस्य तस्य वास्तुनः विभिन्नेष्वङ्गेषु विभिन्नानां देवादीनां वासः प्रकल्पितः, (१) पुराणोक्तेऽस्मिन् वास्तुशास्त्रविवेचने वेदमन्त्रनिर्दिष्टस्य वास्तुनः स्वरूपं साङ्गो-पाङ्गविवेचनपूर्वकं प्रकाशितम् (१) अस्य वास्तुनः समर्चनीयता (१) वेदेऽपि पूर्वं प्रकाशिता पुराणेषु वास्तुपुरु-षसमर्चनस्य प्रकारः पुरुषामर्चन सदृशः प्रकाशितः, (१) अयमेवास्ति विशेषः । पाश्चात्यैः वास्तुविषयिणी या चर्चा विधीयते तत्र तु जडानां मृतपाषाणलोहप्रभृतीनां तत्त्वानां समायोजमेव निर्दिश्यते, तस्य वास्तुनः पुरुषाकारता समर्चनीतयता च नैव निर्दिश्येते । वस्तुतः वास्तुनः पुरुषाकारता विवेचने समर्चनीयताविवेचने च भारतीयचिन्तन-वैशिष्ट्यं स्पष्टं परिलक्ष्यते, (१) सर्वं खल्विदं ब्रह्म सर्वं ब्रह्ममयं जगत् इत्यादिभिः वेदवाक्यैर्निर्दिष्टं भारतीयचिन्तनं सर्वत्र वास्तुशास्त्रे विराजते ।

भारतीयचिन्तनानुसारेण वास्तुसंज्ञकः पदार्थः खलु सचेतनः पुरुषविशेषो विद्यतेऽतएव वास्तुपुरुष इति कथ्यते । एतस्य वास्तुनः सचेतनमनुसृत्य वास्तुशास्त्रिणो भवनानां निर्माणावसरे वास्तुपुरुषस्य मर्मस्थलानि विचार्य शङ्कुरोपणं विधीयते येन हि मर्मच्छेदो न भवेत् ।

# संस्कृतवाक्साधुत्वपरिधिः

डॉ० परमानन्दः झा

सन्ति काश्चित् समस्याः सुरगिरोऽस्याः, यासु भाषान्तरीयप्रचलितपदस्थानीयपदनिर्मितिकृता च काठिन्यानुभूतिः प्राथम्यं भजते। अद्य सन्धिविषये 'संहितैकपदे नित्ये' ति नियममुल्क्रम्य 'अल्प-आहारः' 'ग्रीष्म-अवकाशः' इत्यादौ सामासिकप्रभृतिनियतसांहितिककार्यस्थलेऽपि उच्चारणसौकर्याय सन्धेः कामचारिता स्वीकृता। अकारान्तादिकतिपयसरलशब्दमात्रानुगमेन शब्द-शास्त्रीयाभिः सीमितोत्सर्गापवादशङ्खलाभिरेव कृत्यं निर्वोढुमारब्धम्। कारकेऽपि क्रियाविभक्तयपेक्षया उपपदविभक्तीनामेव प्रयोगो बहुलीकृतः, दीर्घदीर्घतरसमासाचि यथासम्भवं परिहृताः। जटिलानि तद्धितक्षेत्राण्यपि प्राथमिकपथे अन्यस्थितानि। क्रियापदप्रयोगेऽपि दुर्गमपूर्वोत्तरतिङन्तपदपद्धतिमवधूय सरलतरेण कृदन्तपथेनैव गन्तव्यं निर्धारितम्। तदेवं व्याकरणबोधबाधादृष्ट्या कानिचन शैथिल्यानि स्वीकृत्य प्रचलितशब्दानुकरणतदनुवादादिविषयेऽपि व्यवहारपथः सारल्यमानीतः। प्रचलितसञ्ज्ञाशब्दाः यथावत् संस्कृतेऽपि प्रवेशिताः। बस्-ट्रक प्रभृतीनि यानानि अत्रापि धावितुमारब्धानि। लोके अपभ्रंशभाषापदानाम् इतरमूलभूतभाषापदानां वाऽनुवादः तत्तच्छब्दसन्निकटतरवर्तिभिरेव संस्कृतशब्दैः प्रक्रान्तः। तदेवं सम्प्रति अत्र भाषायां सारल्यमालक्ष्य मनाक् परिवर्तनमपि—शैथिल्यमपि—नियमोल्लङ्घनमपि सोढ्वा व्यावहारिकतासमुत्कर्षाय बहुविधाः प्रयत्नाः क्रियमाणाः सन्ति संस्कृतज्ञैः।

एतस्मिन् पुनः क्रमोपनतेषु केषुचिद् उक्तभाषान्तरीयसञ्ज्ञापदोपादानसन्धिसमासादिकतिपयशब्दशास्त्रीयसिद्धान्तविषयकेषु शैथिल्येषु कतिपये प्राचीनविचारधाराधुरन्धराः पारम्परिकप्रयोगधारोद्धारमसहमानाः भवन्ति। तेषां पुनरयमाशयः—

अद्य नवयुवकेषु संस्कृतसंरक्षणोत्सुकेषु केषुचित् पुष्कलोत्साहः परिलक्ष्यत इति हर्षप्रकर्षविषयः, परं स्वच्छन्दममन्दमान्दोलितेऽस्मिन् क्रमे क्रमेण शिथिलितेषु शास्त्रीयमर्यादाबन्धेषु उत्तराधिकारिणां समक्षं परिनिष्ठितगद्यखण्डमण्डितानि निगूढानि निगमागमरहस्यानि शनैः शनैः बोद्धृणां विरहे निगूढतरतामापद्य विपत्स्यन्ते। तदेवं प्राञ्जलप्रवाहमयी संस्कृतपरिष्कृतवाग्धारा नोपेक्षणीया। साधारणपदप्रयोगापेक्षया विशिष्टपदप्रयोगे सविशेषोऽभिनिवेशो भवगतः पतञ्जलेः। तथा चोक्तं तृतीयाध्याये तेनैव—

[१]नाकमिष्टसुखं यान्ति सुयुक्तैर्बडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ॥ इति

अयमाशयः पतञ्जलेः— व्याकरणशास्त्रे वैकल्पिकनियमजातैः साधारणानि विशिष्टानि च उभयविधान्यपि व्यावहारिकाणि पदानि व्युत्पादितानि । यथा— इच्छार्थकात् कम्धातोर्लुङि रूपद्वयमुपपादितम्— 'अचीकमत' इति, 'अचकमत' इति च । तत्र 'अचकमत' इति वैकल्पिकविशिष्टलक्षणलक्षितं पदं प्रयुञ्जानाः जनाः सुयुक्तैः बडवारथैः इष्टसुखं स्वर्गं यान्ति, अथ ये पुनः सामान्यविधिसिद्धम् 'अचीकमत' इति पदं व्यवहरन्ति ते पादौ कर्षन्तः स्वर्गं यान्ति इति। तदेवं तिङन्तादिविशिष्टपदप्रयोगो नवीनैर्नोपेक्षितव्यः। किञ्च उक्तव्याकरणनियमानादरातिरिक्तं नवनवलोकप्रचलितभाषान्तरीयसञ्ज्ञादिशब्दप्रयोग-स्वाच्छन्द्यमपि नैव युक्तम्, तथा सति गीर्वाणवाणीगौरवविलोपसंभवात् संस्कृतशब्दसाधुत्वविधाताच्च । अतस्तच्छब्दविनियोगवेलासु समृद्धतरसुरगिरैव अनूद्य वक्तव्यम् इति ।

अत्र पुनः प्राचीनजनोत्क्षिप्ताक्षेपद्वयविषये इदं वक्तव्यं नव्यानाम्—

कस्याश्चिदपि भाषाया मुखाकृतिर्द्विविधा भवति—प्रायोगिकी साहित्यिकी चेति । तत्र सर्वत्रापि भाषासु प्रायोगिकी व्यावहारिकी वा प्रवृत्तिः साहित्यिकपरिनिष्ठितपदप्रवाहापेक्षया सरलतरा भवत्येव। सम्प्रति संस्कृतवाग्विमुखाया भारताभिजनमानसिकताया अवरोधनाय, तत्र च इमां वाचं प्रति रुचेरुत्पादनाय प्राथमिकमभियानमेतत् । अभिरुचेः पुनस्तत्र उन्मेषे जाते, 'शनैः शनैः पदं धत्ते' इति प्रथितया अभियुक्तोक्तपद्धत्या प्राञ्जलेष्वपि शास्त्रीयपरिनिष्ठितपदप्रवाहेषु, विशिष्टेष्वपि व्याकरणव्युत्पादितवैकल्पिक पदव्यवहारेषु, चामत्कारिकीष्वपि काव्यवचनचातुरीषु स्वयमेवाभिनिवेशो जनिष्यते जनानाम् । अतो नास्त्यत्र प्राचीनोत्प्रेक्षितः निगूढतरबहुतरशास्त्रोच्छेदसम्भवः। चिरन्तनैः शास्त्रकारैरपि युगानुरूपशिथिलशिष्यमेधामभिलक्ष्य सारगर्भाः सन्दर्भाः सरलीकृता एव । अस्या एव सरलीकरण प्रवृत्तेः फलं शब्दशास्त्रे अष्टाध्याय्याः प्राक्तनीमध्ययनपद्धति-मुत्क्रम्य ऋजुतरनूतनप्रयोगपद्धतिपरिकल्पिकायाः कौमुद्याः प्रणयनं, तत्रापि त्रीणि संस्करणानि । एवं शास्त्रान्तरेष्वपि द्रष्टुं नैकानि निदर्शनानि। तदेवं प्रतिपलं परिवर्तमानां कालप्रवृत्तिमनुरुध्य साहित्यगतसारल्यपरिकल्पनापि समुचितैव ।

किञ्च प्राक्तनपद्धतिधुरीणानाम् अपरमस्वारस्यं साम्प्रतिके सारल्याभियाने नवनवभाषान्तरीयाऽसाधु-भूतप्रभूतसंज्ञादिपदप्रश्रयप्रदानविषये । तत्रापि तावदिदं वक्तुमुचितम्—

किं तावत् साधुत्वं नाम शब्दानाम्? यतः एतत्स्वरूपनिरूपणप्रसङ्गेऽपि सुमहान् कोलाहलः शास्त्रकारेषु । तथाहि—

---

१. महाभाष्यम्— ३/२/४८

१. तत्र सर्वतः प्रथमम् 'अनादिव्यवहारविषयत्वं साधुत्वमिति' केचित्। तस्य अयमाशयः— लोके लक्ष्यमाणाः नानाविधभाषाशब्दाः वक्तृणां करणवैकल्यादिना अपभ्रंश-रूपमापन्नाः वस्तुतो मौलिकतया संस्कृतभाषाया एव विकीर्णाः सन्ति परितः। यथागोशब्दस्य संस्कृतमूलभूतस्य गावीगोवीगोतागोपुतलिकागाय-गैयाप्रभृतयः। तत्र गोशब्दः अनादिव्यवहारविषयत्वात् साधुः, गाव्यादयश्च आदिमत्त्वादसाधवः। अनादित्वे प्रमाणानि पुनः वेदवेदाङ्गपुराणस्मृतीतिहासकाव्यकोषादयः शास्त्रविस्तराः एव।

२. प्रागुक्तपरिभाषायां पुनरेका समस्या आपततिवेदपुराणादीनि शास्त्राणि चिरन्तनकालिकानि, तत्र विविधानाम् अपपाठानामपि संभवात् तद्व्यावृत्तिः कथं स्यादिति। एतत्समाधानार्थञ्च तत्र लक्षणे पुनः निवेशो व्यधायि— 'अनादिव्यवहारविषयत्वे सति व्याकरणान्वाख्येयत्वं साधुत्वम्' इति। एवञ्च उक्तसाधुपदसमूहाप-तितानुचितपदानां व्याकरणनिकषपाषाणबलेन व्यावृत्तिः। ये खलु शब्दाः वैयाकरणैः अन्वाख्याताः शास्त्रे व्युत्पादितास्त एव साधवः नान्ये इति।

३. पूर्वत्र लक्षणे पुनरेकाऽऽपत्तिः। अनादिपरम्पराप्राप्तानां व्याकरणान्वाख्येयानां च पदानामेव साधुत्वं, अपरिचितेषु रूढिमापन्नेषु च संज्ञाशब्देषु का गतिः? तेषामपि यदृच्छाशब्देन व्यवहारोपलम्भादिति। एवञ्च पुनरपि संशोधनं कृतम्। अनादिव्यवहारविषयत्वे सति व्याकरणान्वाख्येयत्वे च सति पुण्यजनकतावच्छेदकधर्मवत्त्वं साधुत्वम् इति। एतेन यादृच्छिकपदानां स्थानं शास्त्रविहितैव संज्ञा विधेया, तस्या एव पुण्यजनकत्वात्। तथा च आपस्तम्बवचनम्— 'द्व्यक्षरं चतुरक्षरं वा नाम पूर्वमाख्यातोत्तरम्' इति। यदि पुनर्यादृच्छिकेष्वपि तन्मूलमुपल-भ्यते, तदा तानि अपि सुखेन ग्रहीतुं शक्यानि। यथोक्तं भाष्ये पतञ्जलिना— "न्याय्यभावात् कल्पनं संज्ञादिषु न्याय्यः ऋतकशब्दः शास्त्रान्वितोऽस्ति स कल्पयितव्यः साधुः सञ्ज्ञादिषु। ऋतक एवासौ न लृतक' इतीति।

४. इदानीमन्ते एको दोषः भूयोऽप्यवशिष्यते। उक्तसञ्ज्ञापदेषु न सर्वत्र मूलभूतानि संस्कृतपदानि प्रतिभासन्ते, नापि तानि व्याकरणेन अन्वाख्यातुं योग्यानि, परं तेषां प्रयोगश्च भवति शास्त्रेषु अस्यां स्थितौ तादृशानां टि-घु-भ-प्रभृतीनां पारिभाषिकविचित्रपदानां क्व शरणमिति। एवञ्चोक्तस्थितिमनुभूय भूयोऽपि एकं लक्षणखण्डमायोजितम्— अनपभ्रष्टत्वं साधुत्वमिति। अर्थात् टि-घु-प्रभृतीनि संज्ञापदानि मा भवन्तु अनादीनि, व्याकरणान्वाख्येयानि, पुण्यजनकानि वा, परं तानि अपुण्यजनकान्यपि नैव सन्ति, तेषां शास्त्रेषु लघुभूतेन पथा बहुलतरतत्त्वसङ्केतहेतवे कल्पितत्वात्। एषा च पद्धतिः पतञ्जलिनापि दर्शितादर्शा। तथा च पस्पशे प्रसङ्गवशेन तेनोक्तम्— हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति, नाभ्युदयाय इति।

तदियता महता परिकरेण साधुत्वस्य निर्दुष्टं स्वरूपमेवं फलति— 'अनादिव्यवहारविषयत्वे सति व्याकरणान्वाख्येयत्वे सति पुण्यजनकतावच्छेकधर्मवत्त्वे च सति अनपभ्रष्टत्वं साधुत्वम् इति। तदित्थं शब्दसाधु-त्वलक्षणपरीक्षणसमनन्तरं प्राचीनपारम्परिकधारणाधराणां विद्वद्वराणां सन्देहास्पदे नवनवभाषान्तरीयसंज्ञाशब्दो-पादनविषये दृष्टेरिदानीं स्फीतता संभाव्यते।

इदन्तु अवश्यमवधेयम्— एषु दिवसेषु सत्यपि संस्कृतसंबन्धिततत्प्रयोगसमुलब्धिसंभवे केचन नवीनाः आलस्येन वा अज्ञानेन वा स्पष्टतया बोधे सौकर्य्याय वा तत्स्थानीयानि भाषान्तरीयपदानि साभिनिवेशं पत्रपत्रिकादिषु लेखनसमये निवेशयन्तो दरीदृश्यन्ते। एषा च प्रवृत्तिः नूनमेव निरोद्धव्या। समृद्धतरा याः संस्कृतवाचः लोकातिशायिनि वाङ्मयनिधौ अद्भुता असीमिता च शक्तिः शब्दसंसृष्टिसिद्धये। अद्य विविधाभिः संस्थाभिः तत्तत्प्रचलितभाषान्तरीयपदसन्निकटवर्तिसंस्कृतपदानां सर्जनापि क्रियमाणा एवास्ति। अतः तैरेव शब्दैर्व्यवहर्तुं चेष्टितव्यं सति सम्भवे। पाठकानां बोधसौकर्य्याय च क्वचित् क्वचित् कोष्ठकमाध्यमेन भाषान्तरीयाणां प्रचलितपदानां सङ्केतो विधातुं शक्यते। किञ्च तेषामेव अन्यभाषीयशब्दानाम् औणादिकादिशास्त्रोत्प्रेक्षाबलेन निकटवर्तिनि समुचितार्थे प्रकृतिप्रत्ययकल्पनया सिद्धिं विधाय प्रयोगः क्रियते चेत् तदा संस्कृतवाङ्मयस्य शब्दसमृद्धिरूपो महानुपकारोऽपि सम्पद्येत, कियतांशेन बोधसम्बन्धिनी बाधापि दूरीक्रियेत।

# संस्कृते अनुसन्धानस्य नवीनक्षेत्राणि जलविज्ञानम्

श्री सतीशचन्द्र झा

[लेखेऽस्मिन् जलस्य विषये, तत्तत्संरक्षणोदायानां च विषये प्रमाणनिर्देशपुरस्सरं चर्चा विहिता वर्तते—सम्पादकः]

स्वतन्त्रता प्राप्तेः चतुःपञ्चाशत् वर्षाणि व्यतीयन्ते तथाप्यद्यापि अस्माकीनं भारतं विकासशीलदेशेष्वेव परिगण्यते। न तु विकसितदेशेषु। अत्र किं कारणम्? इदानीमपि केचन भारतीयाः एतादृशाः वर्तन्ते, ये मानसिकीं स्वतन्त्रतां नाद्यापि प्राप्तवन्तः तिष्ठन्ति। भौतिकसुखानां चाकचिक्येन आत्मविमुग्धास्ते सर्वत्र पाश्चात्यज्ञान-विज्ञानामेव श्रेष्ठतां मन्वानाः वर्तन्ते। "नैष स्थाणोरपराधः यदेनमन्धो न पश्यति, पुरुषापराधः स भवति" इति यास्कवचनं तेषामेव तात्त्विकीं स्थितिं प्रकाशयति।

अस्माकं शास्त्रेषु पुराणेषु तथा अन्यस्मिन् वाङ्मये च निहितं निगूढं च शास्त्रविज्ञानमपारमिति वयं जानीमः। तस्य प्रकाशाय प्रचाराय च समयोऽयं संप्राप्त इति तस्यां दिशि सर्वैः अस्माभिः चिन्तनीयम्। अतः आवश्यकता विद्यते यत् संस्कृते अनुसन्धानानां नवीनक्षेत्राणाम् अन्वेषणं भवेत्, सैद्धान्तिकविचाराणां प्रायोगिकानुसन्धानव्यवस्था भवेत्। एतेन देशस्य महान् उपकारः भविष्यति। भारतमपि पूर्वविकसितदेशानां सरिणषु सर्वस्मिन् क्षेत्रे स्वीयं विशिष्टं स्थानं प्राप्स्यति। एतत् सर्व मनसि निधाय अत्र जलविद्यायाः क्षेत्रे, विशेषतः भैषज्यरूपेण व्यवहारे, जलस्य स्रोतसां क्षीणतायाः अपाकरण विषये अनुसन्धानस्य दिशः चिन्तनं विधीयते।

जलं जीवनापरपर्यायमेव—'पयः कीलालममृतं जीवनं भुवनं वनम्।' सर्वे वैज्ञानिकाः मन्वते यत् मानवशरीररचनायाम् अशीतिप्रतिशतं जलमेव वर्तते, प्रोटीनरुपेण यत् आधीयते, तत्र पञ्चाशीति प्रतिशतं जलमेव, प्रोटीनतत्त्वं जीवनस्य कृते अपरिहार्यम्। नैकान्तं मानवानां कृते प्रत्युत समग्रजीवधारिणां कृते जलस्यापरिहार्यता स्वयं सिद्धा। संस्कृत साहित्ये बहुत्र प्रतिपादितं वर्तते यत्—

**पानीयं प्राणिनां प्राणास्तदायत्तं हि जीवनम्।**
**तस्मात् सर्वास्ववस्थासु न कच्चिद्वारि वार्यते॥**

**अन्नेनापि विना जन्तुः प्राणान् धारयते चिरम्।**
**तोयाभावे पिपासार्तः क्षणात् प्राणैर्विमुच्यते॥**

अन्नं नापि प्रभवति पानीयात् कुरुसत्तम।
नीरजातेन हि विना न किञ्चित् संप्रवर्तते ॥

जीवानां जीवनं जीवो जगत् सर्वन्तु तन्मयम्।
अतोऽत्यन्ततया सुज्ञो न क्वचित् वारि वार्यते ॥

तृष्णा गरीयसी घोरा सद्यः प्राणविनाशिनी।
तस्माद्देयं तृषार्ताय पानीयं प्राणधारणम् ॥

भैषज्यशास्त्रस्यापि आचार्याः नैकान्तं प्राणरक्षणाय जलस्य महत्त्वं स्वीकुर्वन्ति, प्रत्युत विविधरोगाणां चिकित्सायै जलप्रयोगस्य महिमानं प्रययन्ति—

वाग्भटः कथयति—

पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम्।
अतोऽत्यन्तनिषेधेऽपि न क्वचिद् वारि वार्यते ॥

'नहि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य वा।'

राजवल्लभो ब्रूते—

'तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति।
तस्माज्जलमवश्यं हि दातव्यं भेषजैः समम् ॥'

आयुर्विदां भैषज्यत्वेन जलस्य स्वीकरणं, तदनिवार्यत्वं वा अथर्व वेदस्य निदर्शानुरूपमेव वरीवर्ति। अथर्ववेदे जलानाममृतत्त्वं भैषज्यं च सुस्पष्टतया प्रतिपादितमस्ति। 'अप्सु अमृतम्' 'अपां भैषज्यम्' अप्सु विश्वानि भेषजानि, आपः पृणीत भेषजम्। इत्यादीनि अथर्ववेदवचनानि जलस्यरोगनिवारणशक्ति प्रथयन्ति। शरीरे तत्वानां साम्य मेव नेरुज्यं, तत्त्वानां विषमता च रोगः। 'शन्नो देवीरभीष्टये आपो भवन्तु पीतये, शंयो रभिस्रवन्तु नः' इति मंत्रे अयमेव संकेतितार्थः वर्तते। अथर्ववेदे इदमपि प्रतिपादितमस्ति यत् हृदयसम्बन्धिनः रोगाः जलोदररोगः, हृदयदाहः, नेत्रदाहः, अपामार्गरोगादिः, जलस्य सेवनात् दूरीभवति। जल चिकित्सायाः अनेके उल्लेखाः अथर्ववेदे प्राप्यन्ते। तत्रेदञ्च प्रतिपादितमस्ति यत् वाष्परुपेण जलादानेन अनेकरोगाणवः शरीरात् बहिः भवन्ति। उदरविकाराणामपाकरणाय नाभिप्रदेशतः जघनस्थलं यावत् जलेन क्लिन्नत्वम्, आर्द्रेण चाङ्गवस्त्रेण नाभिस्थलोपरि शनैः शनैः मर्दनं लाभकरं भवति। लवणमिश्रितेन जलस्थानेन नेत्ररोगः, सर्पादिभिः दष्टे स्थले सततं जलधारा पातनेन विषयस्य कुप्रभावः ललाटोऽपरि शिरसि वा जलक्लिन्न वस्त्रस्थापतेन ज्वरतापजन्यः उन्मादः, कस्मिन्नपि जलाधार पात्रे कटिं यावत् जलमाधाय तत्र कटिस्नेन मधुमेहरोगः, दूरीकर्तुं शक्यः। आनुवंशिकरोगाणां कृतेऽपि जलचिकित्सानिदानम् अथर्ववेदे संकेतितं वर्तते इति। चरकसंहिता सुस्पष्टं प्रतिपादयति यत् कस्मिन् रोगे कस्य जलस्य प्रयोगः करणीयः, तन्मते नभसः पतितं जलं सूर्यस्य उष्णत्वं, चन्द्रस्य शैत्यं, वायौ अवस्थितं धूलिकणसमुच्चयं, विविध कीटाणूनां विषञ्च आनयति, सेवनकर्तुः शरीरं च व्याप्नोति। चरकमते विभिन्नानाम् ऋतूनां जलानां स्वभावेऽपि वैविध्यं

तिष्ठति । वर्षर्तौ: जलं गुरु, तैल बहुलं, शरदृतौ लघु, तैलविरहितं च । शरदृतौ जलं भैषज्यापरपर्यायमेव भवति; यतो हि कृशकाया: जाता: पाकाय पानाय च अस्य जलस्य प्रयोगं कुर्वाणा: स्वस्था: पुष्टशरीराश्च भवन्ति । हेमन्तर्तौ: जलं शक्तिवर्द्धकं गुरु च भवति । फलत: तज्जलपानेन कामोद्दीपकता वर्द्धते । शिशिरर्तौ: जलं लघु भवति, कफपित्तयो : शरीरात् निष्कासने शक्तञ्च तिष्ठति । वसन्ते जलं तैलविरहितं भवति, अत एव पौष्टिकं मधुरञ्च भवति । ग्रीष्मेऽपि जले तैलराहित्यं तस्य भूयस्त्वेन पानं भूयसे लाभाय भवति । एक: आधुनिक: लेखक: एकत्र लिखितवान् यत् ग्रीष्म काले तु यथा मदिरापानकर्तार: Cheers इति वदन्ति तथैव पानचषके जलमदाय कथनीयं Cheers to Water असमये यदि वर्षा भवति तज्जलं पीयते चेत् तदा नैकान्तं तज्जलमस्वादु अपि तु शरीराहानिकरं च जायते । प्राचीनकाले राजान: धनिकाश्च शरदृतौ: जलस्य संरक्षणं कुर्वन्ति स्म, जलस्यास्य पानेन सुस्वास्थ्यं तिष्ठति स्म । न केवलं जले यत् शैत्यं तदेव भैषज्यस्य कार्यं करोति प्रत्युत जलस्य उष्णता तद्दाहकत्वशक्तिश्च आरोग्याय स्वीयां निश्चितां भूमिकां प्रस्तौति । जले नूनम् एक: गुप्त: ताप: [Latert heat] तिष्ठति । अयं च ताप: तरलम् अमोनियागैसं विहाय अपरतत्त्वानां तापतुलनायां सपधिकतरं तीक्ष्ण: भवति । जलं स्वस्मिन् एवं तीक्ष्णं तापं निदधाति यदग्नि सम्पर्कमेत्य उष्णतां प्राप्य, पुनश्च अग्निसम्पर्कराहित्येऽपि अस्य ताप: त्वरितमेव मन्दतां न लभते अपि तु शनै: शनै: मन्दतामेति । अभ्यन्तरे स्थितादस्मादेव तापात् शीतर्तौ जलमुष्णं प्रतिभाति, सागरस्य तटवर्तिषु स्थलेषु शैत्यं स्वल्पतरं भवति, वातावरणे सम शीतोष्णता तिष्ठति । वेदेषु अनेके एवंविधा: मन्त्रा: वर्तन्तेयत्रोल्लेख: विद्यते यत् जले अग्नि: तिष्ठति । अग्नि: सर्वस्मिन् चराचरे जगति विद्यमान: वर्तते । वेदविद: अग्निं जलस्य पित्तम्, ऊष्माणं तेजो वा विद्वांस: अभिदधति । जले अन्तर्नि हिताग्नि कारणादेव मेघा: निर्मीयन्ते, वर्षा च भषति । ऋग्वेदस्य एकस्मिन् मन्त्रे उक्तमस्ति यत् अग्नि: जलस्य गर्भे निवसति, समस्तभूतेषु अग्नितत्त्वं गुप्तरूपेण तिष्ठति:—

**(क) गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।**
**गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥**

यजुर्वेद: ॥ १२/३७

**(ख) आपो यद् वोऽर्चिस्तेन तं प्रत्यर्चत योऽस्मान् द्वेष्टि यं च वयं द्विष्म: ॥**

अर्थववेद: १-२३-३

जलस्यदीपनशक्तिविषये, शोधनशक्तिविषये, तेजस: आधानविषये च अथर्ववेदे गंभीरं वैज्ञानिकं चिन्तनं भारतीयवेदविज्ञानस्य सूक्ष्मनिरीक्षणशक्ंति स्पष्टत: प्रथयति । जलं नूनं भयनिवारकं, पीडानाशकं च । अत्यधिक विशिष्टतापहेतो: एतेस्य उपयोग: उदरपीडायां व्रणादीनां सेकेऽपि जायते । विविधप्रकारकजलानां भैषज्यगुणा अपि विविधा: भवन्ति । आश्विनमासस्य जलं मूर्च्छावमनमूत्राघातहृदयदाहादिरोगाणामपाकरणे क्षमं भवति, बले वृद्धिं करोति, हृदये शक्तिञ्च स्थापयति । आकाशात् पतिते करकाजले शिर:शूलविनाशकत्वम्, उदरदाहनाशकत्वं च तिष्ठति । तुषारकण प्राप्तं जलं कण्ठरोगाणां, प्रमेहकुष्ठादिरोगाणां च नाशकं तिष्ठति । कृमिविकारमपि दूरी करोति । हिमालयात् प्राप्तं जलं रक्तपित्तविकृतिं हृदयविकृतिं च अपाकरोति । सर्वप्रकारकम् उष्ण जलं वातविकारे, कफविकृतिं निवारयति, पाचकत्वमपि निदधाति । उष्णं कृत्वा पुन: शैत्यमापन्नं जलं विशेषत:

पाचनक्रियां वर्द्धयति, सर्वथा शीतलं जलन्तु पित्तनाशकं भवति। एवमेव हिमालयतः प्रभवन्तीनां नदीनां जलं प्रस्तरखण्डैः आघातितं सत् पवित्रं, स्वादिष्टं, विविधरोगविघातकं भवति। मलयगिरेः निः सृततानां नदीनामपि जलं प्रस्तरखण्डैः बालुकाभिश्च सम्पृक्तिमेत्य विशुद्धममृतोपमं च जायते। किन्तु विन्ध्याद्रितः निर्गच्छत् नदीजलं मस्तिष्कहृदय चर्मरोगकृष्ठरोगाणां वाहकं भवति। सुश्रुतसंहिता तु मलयाद्रिनिःसृतं जलं संक्रामकरोगाणां जनकं कथयति। हारीतमते मरुभूमिजलं लघु, स्वादु सर्वरोगविनाशकं च भवति।

एवं विधैः विविध भैषज्यगुणैः युक्तमिदं जलं तथा च मानव-जीवानाय सर्वथा अपरिहार्यमिदं जलं शनैः शनैः जगति क्षीणतायामाति वैज्ञानिकानां कृते गंभीरचिन्तायाः अयं विषयः यत् जलस्त्रोतांसि क्षीणतामायान्ति। एतेषां स्त्रोतसां कः संवर्द्धनोपायः अस्माकं संस्कृत वाङ्मयविज्ञाने तिष्ठति, तत्र विषयेऽपि लेखेस्मिन् विचिन्सते। वयं जानीमः यत् जलं मुख्यतः स्त्रोतोद्वयादुपलभ्येत 'प्राकृतिकं स्त्रोतः' प्रथमं स्त्रोतः, यत्र समुद्रेभ्यः, नदीभ्यः ह्रदेभ्यः, निर्झरादिभ्यश्च जलं लभ्यते। द्वितीयं च स्त्रोतः वर्तते-मानव-निर्मितं स्त्रोतः यत् औदिद्भदं स्त्रोतः अपि कथ्यते। अत्र कूपतडागपुष्करिणी नालिकादीनां च जलमागच्छति। ऋग्वेदेऽपि प्रतिपादितमस्ति यत्—

**"या आपो दिव्या अत्र व स्त्रवन्ति खनित्रिताः उत वा याः स्वयं जाः।"**
**समुद्रार्थाः याः शुचयः पावकास्ता आपो देवीरिहमामवन्तु॥**

ऋग्वेदमते दिव्याः आपः वर्षा जलं, स्त्रवन्तीजलं, निर्झरप्राप्तं जलं, खनित्रिमा आपः— कूपात् नालिकादिभिश्च प्राप्तं जलं, स्वयंजाः आपः— महाद्देभ्यः प्राप्तं जलं, समुद्रार्थाः आपः नदीभ्यः प्राप्तं जलमिति जलस्त्रोतांसि परिगव्यन्ने। अथर्व वेदेऽपि एवमेव तिष्ठति—

**'शं नो आपो धन्वन्याः शमु सन्त्वनूप्याः।**
**शं नो खनित्रिमा आपः शमु या कुम्भ आमृताः।'**

शिवा नः सन्तु वार्षिकीः।

एतत्बृहज्जलस्त्रोतांसि अद्य शनैः शनैः क्षीणतांयन्ति यतो हि निरन्तरं वृक्षाणां छेदनं कृत्वा इन्धन रूपेण तेषां प्रयोगः वर्षाजले क्षीणतामुत्पादयति इति तु वैज्ञानिकं तथ्यं यत् मेघानां संघर्षणमप्यवाप्य मेघाः वर्षन्ति। नदीनां जलेऽपि क्षीणतायाति, यतो हि नदीषु तटानां भूमिभ्यः यः मृत्तिकानिचयः सिकतासमूहो वा नदीनामभ्यन्तरे आयाति। इदं Siting Process कथ्यते। सिल्टिग हत्यस्य अपसारणे भूयान् व्ययः अपेक्षितः वर्तते। नदीषु मृत्तिकासंचयहेतोः जलवार्द्धिगतिः पूर्वपिक्षया तीव्रा भवति, विनाशलीला च जनान् आतुरान् करोति। यदा जलवार्द्धिः समाप्ति याति, वर्षर्तुश्च समाप्तो भवति तदा नदीषु जलमात्रा न्यूनतरा भवति, कृषिकार्ये उपयोगकारणात् तत्रापि क्षीणता, एवञ्चान्ते पशूनां पेयार्थमपि विविधनदीषु जलं न तिष्ठति। नदीष जलयानद्वारा यातायातवस्तु वहनादिकार्यमपिं कठिनं जातमस्ति। कञ्चित्कालपूर्वमेव पाटलिपुत्रसमीपे एकं जलयानं गंगायां जलाभावात् अग्रेसरणे असमर्थ जातम्। एवमेव महाह्रदानां गम्भीरतापि शनैःशनैः स्वल्पतरा भवति तत्रापि पूर्वोक्त कारणं तिष्ठति अथ च तेषां तटवन्धस्य सुरक्षायाः ध्यानाभावेन ततोऽपि जलवार्द्धिरूपेण जलौघस्य निस्सरणं भवति। 'ओजोन' इत्यस्य क्षरणहेतोरपि उष्णता जलं शोषयति, इमानि कतिपयानि कारणानि वर्तन्ते-जलस्त्रोतसां क्षीणत्वे।

एतस्य निराकरणस्य के उपाया: तिष्ठन्ति । तत्र प्रथम: उपाय: वर्तते यत् सर्वकार: वृक्षाणां छेदनविषये एकां कठोरां नीतिं स्थापयतु । यै: तरव: छिद्यन्ते तेषां कृते कठोरदण्डस्य विधानं भवेत् । जलवार्द्धि नियन्त्रणस्य विषयेऽपि नवीना योजना भवेत् । वयं जानीम: यत् बहुषु प्रदेशेषु जङ्गलराज्यं प्रसरति, तटबन्धानां सुरक्षाया: प्रबन्ध: भवत्येव नहि, फलत: भूयान् जलौघ: जलावर्द्धिरूपेण विनाशलीलाया: ताण्डवं प्रतिवर्षमुपस्थापयति । अत्र यदि गंगा कावेरी ब्रह्मपुत्रकृष्णा गोदावरी प्रभृतीनां नदीनाम् अपेक्षितस्थानेषु मेलनोपाय: भवेत् तदा देशस्य कृते भूयान् उपकार: भवेत् । पण्डित जवाहरलालनेहरु यदा प्रधानमन्त्री आसीत् तदा के एल.राव् केन्द्रीय जलसंसाधनमन्त्री इमां योजनामुपस्थापितवान् किन्तु आर्थिक विवशताहेतो: इयं न स्वीकृता । अद्य सर्वकारस्य दृढाया: इच्छाशक्ते-रावश्यकता वर्तते, तदैव इदं कार्यं सेत्स्यति ।

संस्कृतवाङ्मये जलस्त्रोतसां वृद्धेरुपाय: प्रदर्शित: तिष्ठति । यज्ञसाधनहेतो: वर्षा भवति, एतस्य सङ्केत: वेद मन्त्रेषु सुतरां प्राप्यते । यज्ञै: वायु उत्पद्यते, वायु:, मेघरूपेण परिणमते, मेघानां परस्परसंघर्षणेन विद्युत् उत्पद्यते, पुनश्च जलं वर्षति ।[१] यज्ञे एकत्र उल्लेख: वर्तते यत् यज्ञे प्रदत्तं हवि: सूक्ष्मरूपेण सूर्य किरणै: द्युलोकं प्राप्नोति, तत्र मेघै: सम्पृक्तिमेत्य जलरूपं लभते, वर्षणकर्मणा पुन: पृथ्वीमेति, सर्वत्र जलप्लावनं जायते[२] पर्जन्येष्टियज्ञस्य उद्देश्य वर्षा प्राप्तिरेव ।

**"कृष्णे नियानं हरय: सुपर्णा**
**अपो वसाना दिवमुत्पतन्ति ।"[३]**

**मरुतां पृषतीर्गच्छ, वशापृश्निर्भूत्वा दिवंगच्छ ततो नो वृष्टिमावह ।[४]**

इत्यादिषु मन्त्रेषु अयमेव संकेतो लभ्यते । यज्ञादे: य: धूम: उत्थित: भवति, स सूर्यकिरणानां प्रभावै: उपरि गत्वा विद्युत्कणरूपेण परिवर्तितो भवति, घनीभूत: सन् मेघत्वं लभते । वर्षाकारक: मेघ एव मुख्यं जलस्त्रोत:, अत: यज्ञानां बाहुल्येन यदि विधानं भवेत् तदा जलस्त्रोत: वृद्धिं प्राप्नुयात् । द्वितीयं तथ्यं भवति-जलशोधनत्वम् । समुद्रस्य जलं भवेत् अथवा यस्मिन् कस्मिन्नपि स्थाने जलं भवेत् तस्य जलस्य शोधनोपाय: यदि सरल: भवेत् तदा जलसंकट: दूरीकर्तुं शक्य: । दुष्टजलस्य निर्दोषीकरणोपाय: अस्माकं शास्त्रेषु प्रोक्त: । तद्यथा—

**निन्दितं चापि पानीयं कथितं सूर्यतापितम् ।**
**सुवर्णं रजतं लोहं पाषाणं सिकता मृदम् ।**
**भृशं सन्ताप्य निर्वाप्य सप्तधा साधितं तथा ।**
**कर्पूरजातिपुन्नापाटलादिसुवासितम् ।**

---

१. ऋग्वेद:- १.५२.९
२. तदेव - १.१२८
३. तदेव - १.१६४.४७
४. यजुर्वेद:— २.१६

शुचिसान्द्रपटस्त्रावैः क्षुद्रजन्तुविवर्जितम् ।

स्वच्छं कनकमुक्ताद्यैः शुद्धं स्याद्दोष वर्जितम्

पर्णमूलविसग्रन्थिमुक्ता कनकशैवलैः ।

गोभेदेन च वस्त्रेण कुर्यादम्बु प्रसादनम् ।

औद्भिद जलस्य साधनसम्वर्द्धनेनापि समस्यायाः अस्य सामाधानं भवितुं शक्नोति । शास्त्रेषु कथितमस्तिविदार्य भूमिं निम्नां यन्महत्या धारया स्त्रवेत् ।

तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ।

औद्भिदं वारि पित्तघ्नमविदाह्यति शीतलम्

प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ।

मधुरं कटुक पाके वातलं स्याद पित्तलम् ।।

एतेषां तत्त्वानां केवलं संकेतः अत्र लेखे प्रदत्तः यदि विस्तरे गंभीरतया प्रतिपादनं भवेत्प्रक्रियात्वेन निरूपणं च क्रिये तदा नूनं जलसाधनक्षेत्रे अस्माकं काठिन्यं न भविष्यति आवश्यकता वर्तते वेदानां सम्बद्धशास्त्राणां च सम्यगनुशीलनस्य, यतो हि वेदाः अक्षयधनस्य अक्षयाकररूपाः वर्तन्ते येषां वास्तविकविज्ञानमद्यापि विश्वमानवेननाधिगतम्, इत्यलम्,

"जयतु संस्कृतं, जयतु भारतम्"

# नेपालीपाण्डुलिपिमहानिधौ देदीप्यमानाः स्वर्णपाण्डुलिपयः

—डा. वेणीमाधवढकालः

**आमुखम्**

निसर्गसुषमाभिरामस्य गौरीगुरोर्गिरिराजस्य हिमालयस्योत्तुङ्गैः शिखरैर्विश्वविश्रुतस्य पशुपतिसनाथस्य भूवलये एकमात्रस्य हिन्दूराष्ट्रस्य नेपालस्य प्राचीनतमानां दुर्लभाणां हस्तलेखानां संरक्षकतयाऽपि महीमण्डले महती ख्यातिर्वर्तते ।

पुरा दक्षिणमध्यैशियाया विद्यासाधनाया धर्मसाधनायाश्च केन्द्रबिन्दुत्वेन विराजमानः सोऽयं देशो विद्याप्रचारे, धर्मप्रचारे, संस्कृतिविस्तारे, पाण्डुलिपिसंरक्षणे चानुपमं योगदानं कृतवान् इति तद्विदां नापरिचितो विषयः । अतोऽधुनापि वैदिकसनातनधर्मेण, बौद्धधर्मेण, प्राच्यदर्शनेन, बौद्धदर्शनेन च सम्बद्धानां पाण्डुलिपीनां महान् राशिनर्नेपालेन कुक्षीकृतः सुरक्षितश्च विद्योततेतराम् ।

प्राक्कालिकानां नेपालशासकानां ग्रन्थोद्वारे, ग्रन्थरक्षणे, ग्रन्थसारणे च साभिनिवेशा प्रवृत्तिः, पुरा नेपालस्य शताधिकेषु विहारेषु वर्तमानानां बौद्धधर्मावलम्बिनां ग्रन्थोद्धारेण, ग्रन्थरक्षणेन, ग्रन्थरक्षणेन, ग्रन्थसरणेन च पुण्याप्तिर्भवतीति अवधारणा, नेपालस्य भारतचीनमध्यवर्तित्वम्, पाण्डुलिपिसंरक्षणानुकूलपर्यावरणञ्चापि नेपाले दुर्लभपाण्डुलिपिप्राप्तिविधौ हेतुभूतम् । तेनान्यत्र कालक्रमेण, पर्यावरणप्रातिकूल्येन, राजनीतिककारणेन च नष्टा भ्रष्टा अपि संस्कृतहस्तलेखा नेपाले सुरक्षिता लभ्यन्ते ।

सम्प्रति नेपाले वेदवेदाङ्गदर्शनपुराणधर्मशास्त्रायुर्वेदतन्त्रागमबौद्धधर्मदर्शनादिविषयका ऊनसप्ततिसमुत्तरपञ्चशतोत्तरचतुरशीतिसहस्रोत्तरलक्षसङ्ख्याकाः (१८४५६९) हस्तलेखाः सुरक्षिताः सन्ति । तेषु प्रचुरो हस्तलेखराशिर्विक्रमस्य सप्तमीमष्टमीञ्च शताब्दीमभिसम्बन्धाति । पुनश्चात्र विक्रमस्य पञ्चमशताब्दीतोऽष्टमशताब्दीपर्यन्तं स्थापिता द्विशताधिकाः साहित्यकवैशिष्ट्यभाज ऐतिहासिकतथ्योपस्थापका लिच्छविकालिकाः शिलालेखाः, तदुत्तरवर्तिनो मल्लकालिकाः शाहकालिकाश्च सहस्राधिकाः संस्कृतशिलालेखा भारतीयोपमहाद्वीपस्य तदानीन्तनीं प्रकृतिं प्रवृत्तिं संस्कृतिञ्च शंसन्ति सविशेषम् ।

गुप्ताक्षर-कुटिलाक्षर-नागराक्षर-प्राचीनदेवनागरी-देवनागरी-प्राचीननेवारी-नेवारी-भुजिमोल-रञ्जना-मैथिली-बङ्गाक्षर-तैलङ्गाक्षत्र-उड़ाक्षर-तिब्बतीयाक्षरादिषु निबद्धा नेपालस्य हस्तलेखाः प्रलेतिहासपुरातत्त्वादिविविध

विषयकजिज्ञासावतां विश्वाधिवासिनामनुसन्धित्सूनामाकर्षणहेतुभूताः सन्ति । एतेषु हस्तलेखेषु ज्योतिषायुर्वेद-तन्त्रबौद्धदर्शनसम्बद्धानां हस्तलेखानामस्ति प्राचुर्यम् । एते हस्तलेखाः प्रमुखतो नेपालराष्ट्रियाभिलेखालये काष्ठ-मण्डपे सन्निहिताः सति । तथैव केशरपुस्तकालये काष्ठमण्डपे राष्ट्रियपुस्तकालये ललितपुरे महेन्द्रसंस्कृत-विश्वविद्यालये च मूल्यवतां हस्तलेखानां वर्तते भूयसी सङ्ख्या । सामान्यतस्ते आराष्ट्रं पुस्तकालयेषु, धर्मस्थानेषु, व्यक्तिगतसङ्ग्रहालयेषु च लभ्यन्ते ।

अत्र विविधविषयकहस्तलिखितग्रन्थानां नैकविधानि प्रतिरूपाणि विद्यन्ते । केचन हस्तलेखा मूलमात्र-माश्रिताः, केचिदनुवादसहिताः, कतिपये मूलग्रन्थस्य सारसंक्षेपरुपाः, इतरे च विविधाभिष्टीकाभिर्माहिताः सन्ति । तेषु प्राचीनानामन्यत्रालभ्याञ्च केषाञ्चन हस्तलेखानां प्रसङ्गतश्चर्चा विधीयते ।

**नेपालस्य प्राचीना दुर्लभाश्च काश्चन पाण्डुलिपयः**

नेपाले सुरक्षितानां प्राचीनमानां पाण्डुलिपीनाम्, नेपाले एव प्राप्यानामन्यत्र दुर्लभाणां प्राचीनानां पाण्डु-लिप्रीनाञ्च सङ्ख्याऽपि नाल्पीयसी वर्तते । तासु कासाञ्चन प्रमुखाणां संक्षिप्ता सूचना प्रस्तूयते—

वैदिकवाङ्मये— एकादशद्वादशशताब्दीसम्बद्धा वैदिकवाङ्ममयान्तर्गताः पाण्डुलिपिरूपेण विद्यमाना श्रौत्रसूत्रगृह्यसूत्रादिसम्बद्धाः कर्मकाण्डविषयकाश्चानेके हस्तलेखाः ।

राज्याभिषेकादिकर्मकाण्डविषये— नेपालस्य नारायणहिटीराजप्रासादे पञ्चश्रीविलसितैर्महाराजाधिराजै राजपरिवारेण च समये समयेऽनुष्ठेयस्य वैदिककर्मकाण्डस्य राज्याभिषेकादिविविधविषयावलम्बिनः प्राचीना अर्वाचीनाश्च महेन्द्रसंस्कृतविश्वविद्यालयीयग्रन्थागारे सुरक्षिताः शताधिका हस्तलेखाः ।

व्याकरणविषये— परिभाषाप्रदीपार्चिः, प्राचीनतमा अष्टाध्यायी, अष्टाध्यायीमधिकृत्य पुरुषोत्तमदेवेन रचिताया भाषावृत्तेर्विश्वसारचिता सर्वप्राचीना टीका, उदयङ्करस्य मितवृत्त्यर्थसङ्ग्रहः, चन्द्रमतीटीकायुतं पूर्णचन्द्र-टीकायुतञ्च चान्द्रव्याकरणञ्च ।

ज्योतिषविषये— यवनजातकम्, भारद्वाजजातकम्, सुमतितन्त्रम् (महेन्द्रसंस्कृतविश्वविद्यालयतः प्रका-शितम्) वेदाङ्गज्योतिषञ्च ।

धर्मशास्त्रे— नारदीया संहिता (नारदीयस्मृतिः)

साहित्ये— काव्यप्रकाशटीका, नाट्यशास्त्रम्, अश्वघोषप्रणीतः सौन्दरनन्दः, सागरनन्दिकृतो नाटकल-क्षणरत्नकोशः, शुकसप्ततिः, संस्कृतमञ्जरी, पञ्चतन्त्रतन्त्राख्यायिका, सर्वरक्षितविरचिता महासंवर्तनीकथा, नागार्जु-नस्य रत्नावली, रघुवंशस्य सर्वप्राचीना वल्लभटीका, अमरकोशस्य जातरूपमधुमाधवीतिसंज्ञकं टीकाद्वयञ्च ।

पुराणेतिहासवाङ्मये— विष्णुधर्मपुराणम्, स्कन्दपुराणस्य अम्बिकाखण्डः महाभारतम् (सुकथङ्करेण महाभारतपाण्डुलिपीनामालोचनात्मकसम्पादनविधौ सर्वप्राचीना पाण्डुलिपिर्नेपालत एव लब्धा । ततोऽपि प्राची-नतमाः पाण्डुलिपयः सम्प्रति गवेषकैर्लभ्यमानाः सन्ति), अरिमल्लदेवराज्यकाले द्वादशशताब्द्यां विमलबोधेन विरचिता महाभारतस्य विषमपदभञ्जिका टीका (यद्यपि अपूर्णा तथापि महत्त्वपूर्णा) ।

मीमांसायाम्— नयरत्नाकरः (चन्द्रप्रणीतः) ।

योगदर्शने— मैथिलपण्डितस्य योगसूत्रव्याख्या, नागार्जुनीयं योगशतकञ्च ।

वेदान्त— ब्रह्मसिद्धिनाम्नो ग्रन्थस्य तत्त्वसमीक्षानाम्नी वाचस्पतिविरचिता टीका, आत्मतत्त्वविवेकश्च (नरहरिटीकासहितः) ।

वास्तुशास्त्रे— प्रतिष्ठालक्षणसारसमुच्चयः (अष्टमशताब्द्यां लिखितः, सर्वप्रथमं नेपाले प्रकाशितः, तदनन्तरं सचित्रं जापानतः प्रकाशितः) ।

सङ्गीतशास्त्रे— सङ्गीतचन्द्रः (दक्षिणभारताद् नेपाले समानीतः, परं दक्षिणभारते सम्प्रति लुप्तः, नेपाले तु नेवारीभाषानुवादेन युतो लभ्यते) ।

आयुर्वेदे— कश्यपसंहिता (हेमराजपाण्डेयविरचितविस्तृतभूमिकया सह मुम्बयीतः प्रकाशिता), सौश्रुतनिघण्टुः, (सद्य एव महेन्द्रसंस्कृतविश्वविद्यालयेन प्रकाशितः), सिद्धसारसंहिता च ।

तन्त्रे— वैष्णवागमस्य सर्वप्राचीना जयाख्या संहिता (नेपालतः लब्ध्वा प्रकाशिता) सौरसंहिता (सौरतन्त्रस्य एकमात्रमुपलब्धा प्राचीना पाण्डुलिपिः), जयद्रथयामलम् (अप्रकाशितम्) ब्रह्मयामलम् (अप्रकाशितम्), कुब्जिकामतम्, कालोत्तरः, निश्वासः, शैवागमस्य अनेके ग्रन्थाः, तदितिरिक्ता बहवस्तन्त्रग्रन्थाश्च ।

बौद्धवाङ्मये— अभिसमयालङ्कारस्य आलोकटीका, धारिणीसङ्ग्रहः हरिभट्टगोपभट्टयोर्जातकमाला, शतसाहस्रिका प्रज्ञांपारमिता, पञ्चविंशतिसाहस्रिका प्रज्ञापारमिता, गुप्तलिपौ लिखितः कारण्डव्यूहमहायानसूत्रराजः, वज्रयानी विनयः, पालिभाषायां विनयः, निष्पन्नयोगावली, पद्मसम्भवप्रणीता बौद्धग्रन्थाः, कमलशीलप्रणीता बौद्धग्रन्थाः, महायानसम्प्रदायस्य अनेके हस्तलेखाः (महायानसम्प्रदायस्य कतिपये हस्तलेखा राहुलसांङ्कृत्यायन-हड्सन-लेभीप्रभृतिर्नेपालतो लब्ध्वा प्रकाशिताः सन्ति, परं सम्प्रति ततोऽपि प्राचीना अनेके हस्तलेखाः प्राप्ताः सन्ति), विचित्रकर्णिकावदानम् (गद्यपद्यमयं पद्यात्मकेभ्यो जातकमालादिग्रन्थेभ्यः प्राचीनञ्च) । इदमस्ति स्थालीपुलाकन्यायेन कृतं नेपालस्थदुर्लभप्राचीनपाण्डुलिपिदिग्दर्शनम् ।

**नेपालस्य राष्ट्रियाभिलेखालये वर्तमानाः स्वर्णपाण्डुलिपयः**

नेपालशासनस्य पुरातत्त्वविभागान्तर्गतो महीतलनिधिभूतो वर्तते राष्ट्रियाभिलेखालयः । तत्र वर्तमानो हस्तलिखितग्रन्थागारो विश्वस्यैवास्ति मूल्यवान् निधिः । अत्र ज्योतिष-तन्त्र-दर्शन- धर्मशास्त्रविभागान्तर्गता गुप्ताक्षर-नागराक्षरप्राचीनदेवनागरी-देवनागरी-रञ्जना-नेवारी-मैथिलीप्रभृतिषु भारतवर्षीयलिपिषु निबद्धा संस्कृतवाङ्मयसम्बद्धाः त्रिंशत्सहस्रसङ्ख्याकाः (३००००) प्राचीना हस्तलेखाः सन्ति । पुनश्च तिब्बतीयविभागे तिब्बतीयाक्षरनिबद्धा द्वाविंशतिशतसङ्ख्याकाः (२२००) संस्कृतपाण्डुग्रन्था विद्यन्ते । अत्र दर्शनपुराणकाव्यशास्त्रज्योतिषधर्मशास्त्रतन्त्रागमायुर्वेदबौद्धधर्मदर्शनतन्त्रसम्बद्धानां दुर्लभाणां हस्तलिखितपुस्तकानामस्ति बाहुल्यम् ।

नेपालेऽनेकेषां विश्वविद्यालयामनुसन्धातारः पुरातत्त्वान्वेषकादयश्च अस्योपभोक्तारो वर्तन्ते। तथैव जर्मन ओरियन्टलरिसर्चसोसाइटी-अमेरिकीयफोर्डमविश्वविद्यालय-सम्पूर्णानन्दसंस्कृतविश्वविद्यालय-विक्रम-विश्वविद्यालय-तिब्बतीयोच्चाध्ययनसंस्थान-गङ्गानाथकेन्द्रीयविद्यापीठ-काशीप्रसादजायसवालशोधसंस्थानाद्यन्ताराष्ट्रीयसंस्थानामनुसन्धातारः सन्त्यस्य स्थायिन उपभोक्तारः।

ऐतिहासिकगौरवमये विश्वनिधिभूतेऽस्मिन् हस्तलिखितग्रन्थागारे साकमेतैर्हस्तलेखैः काश्चन स्वर्णाक्षरमण्डिता दुर्लभा पाण्डुलिपयो विद्योतन्ते। यासां चर्चायै प्राथम्येन प्रवृत्ता वयम्।

### १. अनुसर्वशनितन्त्रविमलबौद्धशासनम्

चतुर्थपञ्जिकायां १६१२ ग्रन्थसङ्ख्यया निर्दिष्टम्, १२ पत्रैर्युतम्, १२ १/२X५ १/४ इत्याकारसंवलितम्, सौवर्णे रौप्यैश्च तिब्बतीयाक्षरैः समवेतमिदं बौद्धशास्त्रं सौवर्णचित्रान्वितं वर्तते।

### २. अष्टसाहस्त्रिका प्रज्ञापारमिता

राष्ट्रियाभिलेखालयस्य तृतीयपञ्जिकायां निर्दिष्टा, ७१२ ग्रन्थसङ्ख्यया युता, १४ विषयसङ्ख्यया चाङ्किता, २० ३/४X ५ १/२ आकारेणाकारिता, २२१ पत्रैरन्विता चेयं कृतिः ७७४ तमस्य नेपालसंवत्सरस्य भाद्रमासस्य चतुर्थ्यां तिथौ सोमवासरे श्रीकुशलदेवेन सुवर्णरञ्जितै रञ्जनालिप्यक्षरैर्निर्मापिता। रञ्जनालिपौ मूलेन सार्धं नेवारीभाषानुवादोऽपि विद्योतते।

### ३. आर्यजम्भलहृदयनामसङ्गीतिः

चतुर्थपञ्जिकायां समङ्किता, ९४६ ग्रन्थसङ्ख्यायुता, ६२ पत्रैः समन्वितेयं स्वर्णाक्षरमयी सङ्गीतिबौद्धधर्मसम्बद्धा वर्तते। लेखकत्वेनात्र इन्द्रमल्लरत्नमल्लयोरुल्लेखः।

### ४. आर्यश्रीवसुन्धरानामधारिणी

प्रथमपञ्जिकायां ६७९ ग्रन्थसङ्ख्यया निर्दिष्टम्, १०X३ १/८ इयाकारसङ्केतसङ्केतिता, २२ पत्रैरन्विता, सौवर्णै रञ्जनाक्षरैर्लिखिता, सचित्रा चेयं कृतिः प्रारम्भे खण्डिता विद्यते।

### ५. आर्यसर्वदुर्गतिपरिशोधनम्

चतुर्थपञ्जिकायां १५९३ ग्रन्थसङ्ख्यया निर्दिष्टम्, ९ १/२X३ १/२ इत्याकारयुतम् २८ पत्रैः समन्वितम्, नेपालीयकर्गजे सौवर्णै रञ्जनाक्षरैर्लिखितञ्चेदं 'आर्यसर्वदुर्गतिपरिशोधनम्' बौद्धधर्मसम्बद्धं वर्तते। '८१० तमे नेपालसंवत्सरे भूपालेन्द्रमल्लराज्ये लिखितम्' इति पर्यन्ते निर्देशः।

### ६. उत्तरोत्तरमहासंवादः

द्वितीयपञ्जिकायां ४८ ग्रन्थसङ्ख्यान्तर्गतः २१X३ ७/८ इत्याकारेण संवलितः सौवर्णै रञ्जनाक्षरैर्लिखितोऽयं शैवधर्मसम्बद्धः संवादग्रन्थः ३३ पत्रैः समन्वितो वर्तते।

**८. कारण्डव्यूहमहायानसूत्ररत्नराजः**

राष्ट्रियाभिलेखालयस्य द्वितीयपञ्जिकायां २१२ ग्रन्थसङ्ख्यया निर्दिष्टः, ४० पत्रैरन्वितः नीपपत्रे स्वर्णमयै रञ्जनाक्षरैर्लिखितोऽयं हस्तलेखोऽवसाने खण्डितो वर्तते ।

**९. कारण्डव्यूहमहायानसूत्ररत्नराजः**

बौद्धशास्त्रसम्बद्धः स्वर्णाक्षरलिखितोऽयं हस्तलेखः । तृतीयपञ्जिकायाम् ३२६ ग्रन्थसङ्ख्यया, १३ ३/४X३ ३/४ इत्याकारेण च सङ्केतित एष ग्रन्थः पूर्णो वर्तते । 'हनुमद्ध्वजनेपालेश्वरमहाराजाधिराजराजेन्द्रः, सकलराजचक्राधीश्वरः श्री श्रीजयपार्थिवेन्द्रदेवमल्लदेवपरमभट्टारको निजे राज्यकाले सर्वदैव विजयी भवेत् इति पुष्पिकावाक्यं वर्तते । ८०३ तमे नेपालसंवत्सरे ग्रन्थोऽयं सारित इत्युल्लेखश्च तत्र लभ्यते ।

**१०. कारण्डव्यूहमहायानसूत्रम्**

द्वितीयपञ्जिकायां निर्दिष्टम्, १४९ ग्रन्थसङ्ख्याङ्कितम् १२ ५/८X३ इत्याकारेणाकारितम्, ९२ पत्रैः समन्वितञ्च रञ्जनालिपौ लिखितं कारण्डव्यूहमहायानसूत्रमिदं सुवर्णाक्षरमण्डितमस्ति ।

'काष्ठमण्डपनगर्यां शाक्यभिक्षोः श्रीजीराजस्य पुत्रेण शाक्यभिक्षुणा श्रीमताऽन्तरामेण निजपरिवार-कल्याणाय पुण्यप्राप्तये च महाराजाधिराजस्य श्रीजयसिंहदेवस्य विजयराज्ये लिखितम्' इति तत्र निर्देशः ।

**११. कारण्डव्यूहमहायानसूत्रसहिता ग्रहमातृकानामधारिणी**

द्वितीयपञ्जिकायां निर्दिष्टा, १५० ग्रन्थसङ्ख्ययाऽङ्किता, १७ १/४X४ इत्याकारेणाकारिता, ८४ पत्रैः समन्विता, रञ्जनालिपौ सुर्णाक्षरैर्लिखिता चेयं कृतिर्बौद्धानामुपासनासम्बद्धा वर्तते ।

**१२. कारण्डव्यूहमहायानसूत्ररत्नराजः**

चतुर्थपञ्जिकायां १२ ग्रन्थसङ्ख्यया युतः, २३ विषयसङ्ख्यया निर्दिष्टः, ९३ पत्रैरन्वितोऽयं ग्रन्थः सौवर्णै राजतैश्च रञ्जनाक्षरैर्लिखितो वर्तते ।

**१३. कारण्डव्यूहमहायानसूत्ररत्नराजः**

द्वितीयपञ्जिकायां १५० ग्रन्थसङ्ख्यया ३१ विषयसङ्ख्यया च निर्दिष्टः, ३१ पत्रैर्युतोऽयं हस्तलेखो नीलपत्रे सौर्णै रञ्जनाक्षरैरनुप्राणितोऽस्ति ।

**१४. ग्रहमातृका**

चतुर्थपञ्जिकायां १२७ ग्रन्थसङ्ख्यया निर्दिष्टा, १० पत्रैः समन्विता, ८ १/२X२ १/२ इत्याकारयुता, सौवर्णै रक्षरैर्नेवारीलिपौ लिखितेयं कृतिर्बौद्धधर्मसम्बद्धा वर्तते ।

### १५. ग्रहमातृका

चतुर्थपञ्जिकायां १५८९ ग्रन्थसङ्ख्यया निर्दिष्टा, नेपालीयकर्गजे नेवारीलिपौ सौवर्णैरक्षरैर्लिखिता, २३ पत्रैः समन्विता चेयं कृतिः बौद्धधर्मसम्बद्धा वर्तते ।

### १६. गणपतिकवचादिसौभाग्यकवचान्तः स्तोत्रसङ्ग्रहः

द्वितीयपञ्जिकायां ९० ग्रन्थसङ्ख्या निर्दिष्टः, नेपालीयकर्गजे सौवर्णैर्नवारीलिपिवर्णैर्लिखितः, ३२ पत्रैर्युतः, १२X३ इत्याकारसंवलितोऽयं स्तोत्रसङ्ग्रहो वर्तते । अत्राधोनिर्दिष्टशीर्षकान्विता विषयाः समाहिताः सन्ति—

(क) दारिद्र्यगणपतिकवचम् (ख) हनुमत्स्तोत्रम्

(ग) कुञ्जिकाकवचम् (घ) कुञ्जिकायास्त्रैलोक्याकर्षणकवचम्

(ङ) त्रिपुरसुन्दरीकवचम् (च) सौभाग्यकवञ्च ।

### १७. चतुः षष्टिलिङ्गनामनिर्देशः

द्वितीयपञ्जिकायां ७५ ग्रन्थसङ्ख्यया युते, ६X२ ७/८ इत्याकारसङ्केतसहिते, सौवर्णैर्देवनागर्यक्षरैर्लिखितेऽस्मिन् हस्तलेखे चतुःषष्टिशिवलिङ्गानां चतुः षष्टिशैवतीर्थानाञ्च महिमवर्णनं विलसति ।

### १८. दुर्गतिपरिशोधनसहिता अपरिमितायुर्धारिणी

तृतीयपञ्जिकायां ३२६ ग्रन्थसङ्ख्यया निर्दिष्टा, १३ ३/४३ ३/४ इत्याकारसंवलिता, नेपालीयकर्गजे सौवर्णै रौप्यैश्च रञ्जनाक्षरैर्लिखिता २० पत्रैश्च युतेयं कृतिर्बौद्धधर्मविषया विद्यते ।

**१९. दुर्गतिपरिशोधनम् चतुर्थपञ्जिकायां निर्दिष्टम्, १५९३ ग्रन्थसङ्ख्यया, ४३ विषयसङ्ख्यया च समन्वितम्, २८ पत्रैरन्वितं, नीलपत्रे सौवर्णै रञ्जनाक्षरैर्लिखितमिदं दुर्गतिपरिशोधनं बौद्धधर्मसम्बद्धं वर्तते ।**

### २०. दुर्गासप्तशती

चतुर्थपञ्जिकायां १५७३ ग्रन्थसङ्ख्यया निर्दिष्टा व्यासप्रणीतमार्कण्डेयपुराणादुद्धृता ५४ पत्रैरन्विता, १०X२ १/२ इत्याकारसंवलितेयं कृतिर्नेपालीयकर्गजे सौवर्णै रञ्जनाक्षरैर्लिखिता वर्तते । ६५५ तमे नेपालसंवत्सरे सारिताया अस्याः पर्यन्ते नरेन्द्रदेवमल्ल-प्रतापमल्लयोर्निर्देशो वर्तते ।

### २१. धर्मपुत्रिकापुराणम्

द्वितीयपञ्जिकायां ४८ ग्रन्थसङ्ख्यान्तर्गतत्वेन निर्दिष्टम्, २१X ३ ७/८ इतिस्वरूपयुतम्, १२ पत्रैः समन्वितम्, सौवर्णै रञ्जनाक्षरैर्लिखितमेतद् धर्मपुत्रिकापुराणं शैवधर्मसम्बद्धं वर्तते ।

**२२. धारिणीसङ्ग्रहः**

चतुर्थपञ्जिकायां १५८९ ग्रन्थसङ्ख्यया निर्दिष्टः ७१/२X२ १/२ इत्याकारसंवलितः, १७ पत्रैरन्वितः, सौवर्णै रञ्जनाक्षरैर्नेपालीयकर्गजे लिखितश्चायं सङ्ग्रहात्मको हस्तलेखः प्रायः खण्डितो वर्तते ।

**२३. धारिणीसङ्ग्रहः**

चतुर्थपञ्जिकायां १६१४ ग्रन्थसङ्ख्यया निर्दिष्टः, ७X३ इत्याकारसंवलितः, ६८ पत्रैरन्वितोऽयं सङ्ग्रहात्मको हस्तलेखो नीलपत्रे सौवर्णै राजतैश्च नेवारीलिप्यक्षरैरनुप्रामितो विद्यते ।

**२४. धारिणीसङ्ग्रहः (सङ्क्षेपात्मकः)**

चतुर्थपञ्जिकायाः ३१५ ग्रन्थसङ्ख्यया निर्दिष्टः, ८X२ इत्याकारयुतः, नेपालीयकर्गजे सुवर्णाक्षरैर्नेवारीलिपौ लिखितः, २५ पत्रैर्युतश्चायं सङ्क्षेपात्मको धारणीसङ्ग्रहः । अस्य पर्यन्ते जयजगज्जमल्लस्य नामनिर्देशः ।

**२५. ध्वजाग्रकेयूरसहिता अपरिमिता**

चतुर्थपञ्जिकायां निर्दिष्टा, १२७ ग्रन्थसङ्ख्यान्तर्गता, सौवर्णैर्नेवारीलिप्यक्षरैर्लिखिता, ३३ पत्रैन्विता च कृतिरियं बौद्धतन्त्रसम्बद्धा विभाति । रणजितसिंहदेवस्य राज्ये लिखितेयमिति पर्यन्ते निर्देशः ।

**२६. नामसङ्गीतिसहिता वसुन्धराधारिणी**

चतुर्थपञ्जिकायां १६०७ ग्रन्थसङ्ख्यया निर्दिष्टा, १३/३ इत्याकारसंवलिता, ३० पत्रैरन्विता चेयं कृतिः सौवर्णै रञ्जनाक्षरैरनुप्राणिता वर्तते । ६२४ तमे नेपालसंवत्सरे लिखितया अस्याः पर्यवसाने रत्नमल्लदेवइन्द्रमल्लदेवयोरुल्लेखो विद्यते ।

**२७. पञ्चरक्षा**

द्वितीयपञ्जिकायां २११ ग्रन्थसङ्ख्यया निर्दिष्टा, १६/४ इत्याकारयुता, १३ पत्रैरन्विता बौद्धशास्त्रसम्बद्धा सौवर्णै रञ्जनाक्षरैर्लिखितेयं कृतिरादावन्त्ये च खण्डिता वर्तते ।

**२८. पञ्चरक्षा (सचित्रा)**

चतुर्थपञ्जिकायां १५४९ ग्रन्थसङ्ख्यया निर्दिष्टा, १४ १/४X४ इत्याकारसंवलिता, ९७ पत्रैरन्विता, नैकविधचित्रयुता, सौवर्णै रञ्जनाक्षरैर्लिखिता चेयं कृतिर्बौद्धधर्मसम्बद्धा विद्यते । पर्यन्ते चास्या राज्ञः प्रतापमल्लस्य निर्देशः ।

**२९. पञ्चरक्षा**

द्वितीयपञ्जिकायां २३६ ग्रन्थसङ्ख्यया निर्दिष्टा, १४ ३/४X३ १/४ इत्याकारसंवलिता, १५४ पत्रैः समन्विता, पञ्चरक्षा सौवर्णै राजतैश्च रञ्जनाक्षरैर्लिखिता वर्तते । अत्राधोनिर्दिष्टा बौद्धधर्मसम्बद्धा विषयाः सङ्कलिताः सन्ति—

(क) आर्यमहासाहस्रप्रमर्दिनी (ख) आर्यमहामायूरी

(ग) आर्यमहाशीलवती (घ) आर्यमहाप्रतिसरा

(ङ) आर्यमहातन्त्रानुसारिणी च ।

### ३०. परमार्थनामसङ्गीतिः

द्वितीयपञ्जिकायामङ्किता, २११ ग्रन्थसङ्ख्ययान्विता, ३० पत्रैः समन्विता, स्वर्णाक्षरै रञ्जनालिपौ रञ्जिता, ६७४ तमे नेपालसंवत्सरे जयचन्द्रमल्लदेवराज्ये लिखिता चेयं कृतिः बौद्धधर्मसम्बद्धा विद्यते ।

### ३१. बौद्धशास्त्रम्

तृतीयपञ्जिकायां ७८४ ग्रन्थसङ्ख्यया निर्दिष्टम्, सुवर्णरञ्जितिब्बतीयाक्षरानुप्राणितं पुस्तकमिदं बौद्धशास्त्रसम्बद्धं विद्यते ।

### ३२. बौद्धस्तोत्रधारिण्यादिसङग्रहः

द्वितीयपञ्जिकायां निरूपितः, २३६ ग्रन्थसङ्ख्याङ्कितः, १४ ३/४X३ १/४ इत्याकारेणाकारितः, १८४ पत्रैः समन्वितः, स्वर्णमयैर्गुप्ताक्षरैर्लिखितोऽयं सङ्ग्रहग्रन्थो बौद्धधर्ममभिसम्बध्नाति । सङ्ग्रहेऽस्मिन् अधोनिर्दिष्ट शीर्षकान्विताः स्वर्णाक्षरलिखिता विषयाः सन्ति—

क) सुखावतीनामाष्टकम् ख) आर्यतारास्रग्धरास्तोत्रम्

ग) प्रजापारमिताऽर्धशतिका (घ) उष्णीषविजयधारिणी

(ङ) देवेन्द्रधारिणी (च) ग्रहमातृकाधारिणी

(छ) विमलोष्णीषधारिणी (ज) यत्नप्रवरी विद्या

(झ) एकजटास्तोत्रम् (ञ) आर्यागममतिहृदयधारिणी च ।

### ३३. भगवतः शान्तक्रोधस्य वज्रसत्त्वविधानम्

बौद्धदर्शनविषयोऽयं स्वर्णाक्षररञ्जितो हस्तलेखः । एष रा. अ. पञ्जिकाया विषयसूच्यामनिर्दिष्टोऽपि राष्ट्रियाभिलेखालयस्य ग्रन्थागारे सुरक्षितो वर्तते । तिब्बतीयायाम् उछेनलिपौ लिखितेऽस्मिन् सन्ति ७७ सङ्ख्याकानि पत्राणि ।

### ३४. भोटाक्षरपुस्तकम्

तृतीयपञ्जिकायां १९२ ग्रन्थसङ्ख्यया निर्दिष्टम्, २० १/२X५ इत्याकारसंवलितम्, १०५ पत्रैर्युतञ्च पुस्तकमिदं सौवर्णैर्भोटाक्षरैरनुप्राणितमस्ति । अस्पष्टायां भोटदेशीयलिपौ लिखितस्यास्य विषयादिकमनुसन्धेयमस्ति ।

**३५. भोटाक्षरपुस्तकम्**

द्वितीयपञ्जिकायां २१३ विषयसङ्ख्यया निर्दिष्टम्, १४ १/२X४ १/२ इत्याकारसंवलितम्, सौवर्णसञ्जितभोटाक्षरैरनुप्राणितं पुस्तकमिदं विषयस्यास्पष्टत्वाद् भोटाक्षरपुस्तकमिति निर्दिष्टमस्ति ।

**३६. रामकवचादिसुन्दरकवचान्तः स्तोत्रसङ्ग्रहः**

द्वितीयपञ्जिकायां ९० ग्रन्थसङ्ख्यान्वितः, १४ पत्रैः समन्वितः १२X३ इत्याकारसंवलितः सौवर्णैनिवारीलिप्यक्षरैर्लिखितोऽयं सङ्ग्रहग्रन्थः । अत्र श्रीरामकवचादयो महत्त्वपूर्णा विषयाः सन्निवेशिता विद्यन्ते ।

**३७. वज्रच्छेदकप्रज्ञापारमिता**

तृतीयपञ्जिकायां ७२२ ग्रन्थसङ्ख्यया निर्दिष्टा, ३८ पत्रैश्च समन्वितेयं कृतिः सुवर्णरञ्जितैः तिब्बतीयाक्षरैर्लिखिता वर्तते ।

**३८. वसुन्धराधारिणी**

वसुन्धराया अष्टोत्तरशतनामसहितेयं धारिणी द्वितीयपञ्जिकायामङ्किता, २११ ग्रन्थसङ्ख्यया समन्विता, १७ पत्रैर्युता, स्वर्णाक्षरमण्डिता च वर्तते । ६७७ तमे नेपालसंवत्सरे भाद्रमासस्य शुक्लपक्षे द्वितीयायां तिथौ मणिसङ्ग्रहमहाविहारवज्राचार्येण श्रीमता जयचन्द्रेण लिखिता इति तत्र निर्देशः ।

**३९. वसुन्धरासारिणी**

चतुर्थपञ्जिकायां ८८७ ग्रन्थसङ्ख्यया निर्दिष्टा, ९ १/२X२ १/२ इत्याकारसंवलिता, ६३ पत्रैरन्वितेयं कृतिरष्टादशसङ्ख्यकैर्मनोहरैश्चित्रैः समन्विता विभाति । कृतिरियं ७७६ तमे नेपालसंवत्सरे सारितेति पर्यवसाने निर्देशः ।

**४०. विष्णुधर्मपुराणम्**

द्वितीयपञ्जिकायां ५१ ग्रन्थसङ्ख्यया निर्दिष्टम्, २० १/८३X ७/८ इतिस्वरूपसंवलितम्, १६३ पत्रैरन्वितम्, सौवर्णै रञ्जनाक्षरैर्लिखितमिदमन्यत्रालभ्यं पुराणं राष्ट्रियाभिलेखालये हस्तलेखरूपेण सुरक्षितमस्ति । मध्येऽस्य चत्वारि पत्राणि खण्डितानि सन्ति । अभयमल्लदेवराज्ये सारितमिति पर्यन्ते निर्देशः ।

**४१. विष्णुसहस्रनामस्तोत्रम्**

तृतीयपञ्जिकायामङ्कितमिदं २०३ ग्रन्थसङ्ख्यान्वितम्, महाभारतान्तर्गतं विष्णुसहस्रनामस्तोत्रं स्वर्णमयैर्देवनागर्यक्षरैर्लिखितं स्वर्णमयैश्चित्रैश्च समन्वितमस्ति ।

**४२. वृषसारसङ्ग्रहः**

द्वितीयपञ्जिकायां ४८ ग्रन्थसङ्ख्यान्तर्गतः, सौवर्णै रञ्जनाक्षरैर्लिखितः, २१X३ ७/८ इत्याकारयुतः, ४२ पत्रैरन्वितोऽयं हस्तलेखः शैवधर्ममभिसम्बध्नाति ।

४३. शिवधर्मपुराणम् द्वितीयपञ्जिकायां निर्दिष्टः, ४८ ग्रन्थसङ्ख्यान्तर्गतः, सौवर्णे रञ्जनाक्षरैर्लिखितः २१X३ ७/८ इत्याकारयुतम्, ४४ पत्रैः समन्वितश्चैतत् शिवधर्मपुराणं रञ्जनालिपौ सौवर्णैरक्षरैर्लिखितमस्ति ।

## ४४. शिवधर्मसङ्ग्रहः

द्वितीयपञ्जिकायां निर्दिष्टः ४८ ग्रन्थसङ्ख्ययान्तर्गतः, सौवर्णे रञ्जनाक्षरैर्लिखितः २१X३ ७/८ इत्याकारसङ्केत सङ्केतितश्चासौ शैवधर्मसम्बद्धो हस्तलेखः ४८ पत्रैः समन्वितो वर्तते ।

## ४५. शिवधर्मोत्तरपुराणम्

द्वितीयपञ्जिकायां ४८ ग्रन्थसङ्ख्यान्तर्गतम्, २१X३ ७/८ इत्याकारसङ्केतेन सङ्केतितम्, ५३ सङ्ख्याकैः पत्रैः समन्वितम्, सौवर्णे रञ्जनाक्षरैर्लिखितमिदं शिवधर्मोत्तरपुराणमखण्डितं हृद्यस्वरूपञ्च विद्यते ।

## ४६. शिवोपनिषद्

द्वितीयपञ्जिकायां ४८ ग्रन्थसङ्ख्यान्तर्गता, नेपालीयकर्गजे सौवर्णे रञ्जनाक्षरैर्लिखिता, २१X ३ ७/८ इत्याकारेण संवलिता, १९ पत्रैः समन्वितेयमुपन्निषत् पूर्णा हृद्यरूपा च विभाति ।

## ४७. सप्तवारधारिणी सहिता पञ्चरक्षाधारिणी

चतुर्थपञ्जिकायां ८८७ ग्रन्थसङ्ख्या निर्दिष्टा, ९X२ १/२ इत्याकारयुता, ४० पत्रैरन्विता सौवर्णै राजतैश्च रञ्जनाक्षरै रञ्जितेयं कृतिः ७७३ तमे नेपालसंवत्सरे लिखिता (सारिता) इति पर्यन्ते निर्देशो लभ्यते ।

## पर्यन्ते किञ्चिदावेदनम्

नेपालस्य पाण्डुलिपिमहानिधौ विराजितानां स्वर्णपाण्डुलिपीनां प्रत्तमित्थं सूक्ष्मं सूचनामूलकं विवरणम् । विश्वाधिवासिनां गवेषकाणां कृते नेपालस्य प्राक्तन्यः पाण्डुलिपयो नवीनतथ्योन्मेषिण्यो बोधप्रदायिन्यश्च सन्तीति नात्र सम्भवेत् केषाञ्चन विप्रतिपत्तिः । यथा नेपालः समुत्तुङ्गैर्हिमशृङ्गैः, सम्मोददायिना निसर्गरामणीयकेन च विश्वस्मिन् विश्रुतस्तथैव नूतननतथ्योन्मेषिभिर्ज्ञानालोकप्रसारणोद्धुरैश्च लक्षाधिकैः प्राक्तनपाण्डुलेखैर्विद्योतते जगति यशस्वितया नितराम् ।[1]

अद्यावधि गवेषकसम्पादकप्रकाशकमुखानि प्रेक्षमाणानामात्मबिम्बप्रदर्शनलालसानां नेपालस्य ग्रन्थागारेषु सुरक्षितानां तेषां समेषां हस्तलेखानामनुसन्धानसम्पादनप्रकाशनादिकार्याणि निष्पादयितुं विश्वाधिवासिषु संस्कृतानुरागिषु मनीषिषु यदि केचनाऽनेन सूचनापरेण विचारपत्रेणाभिप्रेरिताः सन्तस्तत्र प्रवृत्तिभाजो भवेयुस्तदैष विचारपत्रप्रस्तुतिमूलो मदीयः प्रयासः सफलः सम्मोदावहश्च भवेदिति महनीये विश्वसंस्कृतसम्मेलनेऽस्मिन्

१. अस्य सूचनामूलकस्य निबन्धस्य निष्पादने म.सं.वि. वाल्मीकिविद्यापीठे कार्यरतस्य उपप्राध्यापकस्य श्रीदिवाकराचार्यस्य, नेपालराष्ट्रियाभिलेखालये कार्यरतयोः शाखाधिकृतयोः श्रीशुकदेवज्ञवाली-श्रीजगन्नाथोपाध्याययोश्च सौजन्यसौमनस्यानुप्राणितः सहयोगः सकृतज्ञताप्रकाशं संस्मरमीयः ।

समवेतानामत्रभवतां प्रज्ञाप्रतिभाजुषां विदुषां समक्षे सविनयं विनिवेदयताऽनेन जनेन भारतीचरणारविन्दसंस्मरण-पूर्वकं वाग्व्यापाराद् विरम्यते ।

जयतु विश्वकुटम्बवादः जयतु संस्कृतम्

**सन्दर्भस्रोतांसि**

१. नेपालराष्ट्रियाभिलेखालयस्य हस्तलेखाः ।

२. नेपालराष्ट्रियाभिलेखालयस्य वार्षिकमुखपत्रत्वेन प्रकाश्यमानस्य 'अभिलेखस्य' सम्बद्धा अङ्काः ।

३. नेपालजर्मनपाण्डुलिपिसंरक्षणपरियोजनायाः प्रतिवेदनम् ।

४. नेपालराष्ट्रियाभिलेखालयस्य नैकविधाः पञ्जिकाः, अनेकविधानि सूचीपत्राणि च ।

५. नेपालस्यानेकेषां पुस्तकालयानां पञ्जिकाः पाण्डुलिपयश्चेति ।

# भाषातत्त्वविमर्शः

डॉ. रामनारायणदासः

आसृष्टेः अनादिकालतः देशकालजात्यनुसारेण विविधा भाषाः व्यवह्रियमाणाः सन्ति । अण्डजपिण्डज-स्वेदजोद्भिजादिभेदेन चतुर्विधानां प्राणिनामनन्ता भाषाः । कुक्कुटमयूरादीनामण्डजानं मनुष्यपशुप्रभृतीनां पिण्ड-जानां मत्कुणादिस्वेदजानां शस्यधान्यवृक्षादीनामुद्भिजानां परस्परं विभिन्ना ध्वनिर्नाम भाषाः दृष्टिपथं समायान्ति । सर्वासां भाषाणामाकृत्युपसंहारे सति यद्वा सर्वेषां घटाद्यानुपूर्विरूपाणां शब्दानामाकृत्युपसंहारे सति यदन्ते अवतिष्ठते, तदेव सत्यम्, तदेव नित्यम्, तदेव शब्दतत्त्वम् यद्वा तदेव भाषातत्त्वम् । एवं वाच्यार्थानां कम्बुग्रीवादिमद्रूपाणामर्थानामाकृत्युपसंहारे सति यदन्ते अवतिष्ठते तदेव अर्थतत्त्वम्, तदेव च सत्यम् । तदुक्तं भर्तृहरिणा वाक्यपदीयस्य तृतीयकाण्डे जातिसमुद्देशे—

**सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते ।**
**तन्नित्यं शब्दवाच्यं तच्छव्दतत्त्वं न भिद्यते ।।**

तयोः शब्दार्थयोस्तत्त्वं मूलस्वरूपमविनाभूतम् एकोभूतं समरसीभूतम् । तदुक्तं कविशिरोमणिना कालि-दासेन रघुवंशमहाकाव्ये मङ्गलश्लोकेन—

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।**

विश्वस्य सर्वा भाषाः सूक्ष्मरूपेण मूलाधारे मयूराण्डरसादिवत् यद्वा वटवृक्षबीजवत् सूक्ष्मस्वरूपेण लीयमानाः वक्तुरिच्छयाऽनादिकालतः अभिव्यज्यन्ते । वक्तुरिच्छया स्वमूलस्वरूपे लीयमानानां भाषाणां तद्घ-टकशब्दानाञ्च समभिव्यक्तिर्भवति न तु समुत्पत्तिः, शब्दानां नित्यत्वात् ।

सृष्टिमूल एव भाषातत्त्वं वर्तते । यथा बीजे एको महीरुहस्तिष्ठति, यदि तद्बीजं न स्वीक्रियते, तदा शाखापल्लवादिविशिष्टं वृक्षत्वमपि सम्यग् रूपेण सितं न स्यात् । एवमेव भाषाया अपि तत्त्वं विद्यते । भाषावैज्ञा-निका राबर्ट ए. हाल जे.आर. महोदया स्पष्टरूपेण भाषायां बाह्यं स्थूलं स्वरूपं स्वीकुर्वाणाः सूक्ष्मातिसूक्ष्मं आन्तरिकमपि तत्त्वमङ्गीकृतवन्तः । राबर्टमहोदयस्य[१] मतानुसारेण भाषाविज्ञानस्य एकं दार्शनिकमपि स्वरूपं भाषावैज्ञानिकैः स्वीकर्तव्यम् परन्तु एवं बहुधा न दृष्टिगोचरीभवति ।

---

१. The linguist can simply define linguistic forms and their approximate meaning.

भाषाविज्ञानं त्रिविधं दृष्टिगोचरीभवति १. व्याख्यानात्मकम् २. वर्णनात्मकम् ३. ऐतिहासिकञ्च । कस्य वर्णस्य किं स्थानमित्यादिप्रश्नानां समाधानं व्याख्यानात्मकभाषाविज्ञानेन, भाषाणां यत्तुलनात्मकमध्ययनं तद्वर्णनात्मकभाषाविज्ञानेन, शब्दानां यद्वा भाषाणामितिहासः (यथा विकासवादः) ऐतिहासिकेन भाषाविज्ञानेन च सम्पाद्यते । एते सर्वे प्रायेण पाणिनीयव्याकरणस्य प्रक्रियांशेऽन्तर्भूताः । यश्च पाणिनीयं व्याकरणं, तस्य शाखाश्च सम्यक्तया नाधीतवान्, स भाषाविज्ञानकुशलो नैव सम्भवति । भाषाविज्ञाने प्रतिपादितेन केनचित्तथ्येन संस्कृतव्याकरणस्य सामञ्जस्यं केनचिच्च तथ्येन विरोधः ।

अत्र विचारणीयोऽयं विषयो वर्तते न कापि भाषा कस्याश्चिदपि भाषाया जननी । पालिप्राकृतापभ्रंशसंस्कृतभाषासु परस्परं जन्यजनकत्वं प्रतिपादयन्ति भाषावैज्ञानिकाः । केचित् कथयन्ति पालिप्राकृतशब्दानां संस्कारं कारं कारं संस्कृतभाषाया निर्माणं जातम् । केचिद्वदन्ति संस्कृतशब्दानां प्रकृतिप्रत्ययैः सम्मर्द्य पालिप्राकृतभाषयोः जनिरभूत् । एतत्सर्वं तथ्यं न सङ्घटते, शब्दानां नित्यत्वात् । तदुक्तं भगवता पतञ्जलिना शब्दानां नित्यत्वं साधयता "स्थानिवदादेशोऽनल्विधौ पा.सू. (१-१-५६)" इत्यत्र "अनित्यत्वं विज्ञानं तु तस्मादुपसंख्यानम्" इति । वार्तिकस्य व्याख्यावसरे—

"नित्याः शब्दाः, नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनव्यवहारिभिः । तत्र स एवायं "विकृतश्च" इत्येतन्नित्येषु नोपपद्यते" इति ।

संस्कृतशब्दा विकृताः सन्तः पालिप्राकृतशब्दाः सञ्जाताः, यद्वा पालिप्राकृतशब्दा विकृताः सन्तः संस्कृतशब्दाः सञ्जाताः इत्येतन्नित्येषु शब्देषु नोपपद्यते । प्राकृतशब्दस्य विविधं व्याख्यानं कुर्वन्ति विद्वांसः । यथा प्राक् संस्कृतात् कृतः प्राकृतः इत्यादि । वस्तुतस्तु प्रकृतीनां प्रजानां यद्वा प्रकृतिषु प्रजासु व्यवह्रियमाणा या भाषा सा प्राकृतभाषा, प्रकृतीनामियमिति प्राकृतभाषा । अत्र प्रकृतिशब्दः प्रजावाचकः, यद्वा लोकवाचकः । तद्यथा वाल्मीकीरामायणस्य बालकाण्डे प्रथमे सर्गे "प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया," इत्यत्र प्रकृतिशब्दः लोकवाचकः, यद्वा जनवाचकः । अमरकोषेऽपि "प्रकृतिः स्यात् सन्ततौ जने" इति ।

तथाऽऽह शाकटायनः—

इदममरच्छन्दो वर्णशः समनुक्रान्तम्, यथा चाचार्या ऊचुः, ब्रह्मा वृहस्पतये, वृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः, तं खल्विमममरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिः । ब्रह्मराशिरित्यस्य ब्रह्मवेदप्रतिपादको ब्रह्मराशिरित्यर्थः ।

---

But cannot do the work of the chemist, the physicist, the anthropologist, to define meaning — completely and exactly even that at the simplest linguistic form we should have a complete knowledge of the structure of universe and also for everything going inside the body and head of every speaker and every hearer — Robert A. Hall J. R., Linguistic and Your Language P. N. 133

मानवीयभाषासु देवभाषायाञ्च ये शब्दा विद्यन्ते, तेषां परस्परं पृथक् पृथक् सत्ता विद्यते । यत्तु प्राकृतशब्दानां संस्कृतशब्देभ्यो व्युत्पत्तिं कुर्वन्ति । यथा प्राकृतभाषायां सेलो शब्दस्य व्युत्पत्तिः शैलशब्दात् क्रियते । शैल-सेलो, शकारस्य सकारादेशः, ऐकारस्य एकारादेशः सुविभक्तेः ओत्वे "सेलो" इति । एवं पाणिनीयव्याकरणेऽपि सुधी + उपास्यः" सुद्ध्युपास्यः इति । एतत्सर्वं प्रक्रियानिर्वाहार्था वालानां सुखवोधार्थं विद्यते । पणिनीयव्याकरणस्य त्रयोभागाः १— प्रक्रियांशः २— परिष्कारांशः ३— अर्थांशः (दर्शनभागः) ।अष्टौ च स्फोटाः - वर्णपदवाक्यभेदेन त्रिधा । ते च प्रत्येकं जातिव्यक्तिभेदेन द्विधेति षट्, पुनः अखण्डपदस्फोटः अखण्डवाक्यस्फोटः इति । तत्र प्रक्रियानिर्वाहार्थं प्रकृतिप्रत्ययविभागः प्रक्रियांशः काल्पनिकः मिथ्याभूतः । सर्वासु भाषासु अखण्डपदस्फोटः अखण्डवाक्यस्फोट एव सत्यभूतः । सर्वासु भाषासु स्वार्थवाचकाः सर्वे शब्दाः परस्परं भिन्नाः, तेषाञ्च पृथक् पृथक् सत्ता विद्यते । यथा— शैलः, सेलो, कर्णः कान, गौः, गावी, गोता, इत्यादि ।

किञ्च पालिप्राकृतव्याकरणेषु संस्कृतशब्देभ्यः पालिप्राकृतशब्दानां व्युत्पत्तिदर्शनात् संस्कृतभाषा भारतवर्षे सर्वासु भाषासु प्राचीनतमा "इति स्वीकृतेऽपि तासु न परस्परं जन्यजनकत्वम् । यथा पाणिनीयव्याकरणे सुधी + उपास्यः— सुद्ध्युपास्यः" इति शब्दद्वयं परंस्परं पृथक् भिन्नञ्च वर्तते । सुधी + उपास्य एव— सुद्ध्युपास्यशब्दात्मना न परिवर्तितः । सुधी उपास्य इत्यस्योच्चारणप्रसङ्गे सुद्ध्युपास्यः इत्युच्चारणीयम् तच्च साधु भवति । शब्दानां नित्यत्वात् "षष्ठी स्थानेयोगा" इति पाणिनीयसूत्रे स्थानेशब्दस्य प्रसङ्गः अर्थः स्वीकृतः । अतएव वैयाकरणशिरोमणिः नागेशः "एरुः" इति सूत्रस्य भवतीत्यादौ इकारान्तस्योच्चारणे प्रसङ्गे उकारान्तस्य उच्चारणं कर्तव्यम् इत्यर्थः लघुशब्देन्दुशेखरे "स्थानिवदादेशोऽनल्विधौ" इति सूत्रव्याख्यानावसरे स्वीकृतः । न तु भवतिशब्द एव भवतुशब्दरूपेण परिवर्तितः अनया रीत्या प्राकृतादिव्याकरणेष्वपि "शैल" इत्या[1] दिसंस्कृतशब्दानामुच्चारणप्रसङ्गे "सेलो" शब्दस्य उच्चारणं कर्तव्यम् । प्राकृतभाषायां तदेवोच्चारणं साधु । इत्येवं शब्दनित्यत्ववादिभिः सामञ्जस्यं कर्तव्यम् । संस्कृतभाषीयशैलादिशब्दा एव प्राकृतभाषायां "सेलो" "इत्यादि शब्दात्मना परिवर्तितः" इति न । पालिप्राकृतसंस्कृतापभ्रंशादिभाषायाः शब्दाः परस्परं भिन्नाः, अनादिकालतश्च तेषां पृथक् पृथक् सत्ता वर्तते । अनादिकालतः सर्वे साधवः असाधवश्च शब्दा ब्रह्माण्डे विद्यन्ते ।

इत्थं शब्दानां नित्यत्वे स्वीकृते भाषान्तराणां कथमाविर्भाव इत्येयेद् भाषान्तरीयशब्दानां परस्परं सम्मिश्रणेन भाषान्तराणि आविर्भवन्ति । यथा राष्ट्रभाषा भारतीया हिन्दीभाषा । एषा भाषा पालिप्राकृतापभ्रंशभाषाणां शब्दानां परस्परं मिश्रणेन सम्पन्ना । यथा— प्राकृतशब्दाः — तुम्ह, यलदू, गिरा, खाई, करदू, का वहू, होई, सहइ" इत्यादयः ।

अपभ्रंशशब्दा यथा-सोसड, तुम्ह, तुच्छ, वायसु इत्याद्याः एवमुर्दू-फारसी अरबीत्यादिभाषीयाः शब्दाः अस्यां भाषायामुपलभ्यन्ते । साम्प्रतं तु अस्यां भाषायां संस्कृतशब्दानां प्राचुर्येण प्रयोगो दृश्यते । एवं मल्यालः-

---

१. तदुक्त वाक्यपदीयस्य ब्रह्मकाण्डे —
पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥

कन्नड़ादिभारतीयभाषाणां विश्वभाषाणाञ्च समभिव्यक्तिविषये विचारणीयम्, भाषान्तरीयशब्दानां परिवर्तनेन, विपरिणामेन वा भाषान्तरस्य न सृष्टिः शब्दानां नित्यत्वात् विपरिणामासम्भवाच्च ।

ज्ञाता अज्ञाताः सार्थकाः निरर्थकाश्च सर्वे शब्दा अनादिकालतः आकाशमण्डले ब्रह्माण्डे विद्यन्ते । यान् शब्दान् वयं न जानीमः, ते न सन्तीती न समीचीनम् । उपलब्धौ तेषां यत्नः कर्तव्यः । तदुक्तं महाभाष्यस्य पस्पशाह्निके-सर्वे खल्पप्येते शब्दाः देशान्तरेषु प्रयुज्यन्ते । न चैवोपलभ्यन्ते । उपलब्धौ यत्नः क्रियताम् । महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्यं वहुधा भिन्ना । एकशतम-ध्वर्युशाखाः सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम् नवधा आथर्वणो वेदः । वाकोवाक्यम्, इतिहासः, पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेव इति ।

किञ्च शब्दानित्यत्वपक्षेऽपि काऽपि भाषा कस्याश्चिद् भाषाया जननी न सम्भवति । उच्चरितः शब्दः क्षणिकः, तत्प्रसङ्गे अन्यः क्षणिकः शब्दः समभिव्यक्तः । उच्चरितः कर्णशब्दः क्षणिकः, प्रध्वस्तः, तस्मिन् प्रसङ्गे अन्यः क्षणिकः अपभ्रंशः कानशब्दः समभिव्यक्तः, न तु कर्ण एव कानशब्दरूपेन परिवर्तितः । उच्चरितस्य क्षणिकत्वात् प्रध्वंसित्वात्, तस्य परिवर्तनासम्भवात् च । सुस्थिरस्यैव वस्तुनः परिवर्तं न सम्भवति । यथा स्थिरस्यैव मृत्पिण्डस्य घटरूपेण परिवर्तनम् । तथा शब्दो मृदादिवन्न सुस्थिरः । अस्यां स्थितौ शब्दानित्यत्वपक्षेऽपि न हि कस्यचित् शब्दस्य शब्दान्तरात्मना विपरिणयः । एवं शब्दानित्यत्वपक्षेऽपि न काचिद् भाषा अन्यां भाषां जनयति । किन्तु अस्मिन् पक्षेऽपि भाषान्तरीयशब्दानां क्षणिकत्वात् तत्स्थाने अन्या भाषा समभिव्यक्ता भवति ।

वस्तुतस्तु

**यदन्तः शब्दतत्त्वं नादैरेकं प्रकाशितम् ।**
**तदाहुरपरे शब्दं तस्य वाक्यैस्तथैकता ॥** (वा.प.वा.का.उ. ११)

**अपि प्रयोक्तुरात्मनः शब्दमन्तरवस्थितम् ।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥**

सर्वप्राणिनामन्तःस्थितं यत् शब्दतत्त्वम्, तदेव संस्कृतासंस्कृतनिखिलभाषायास्तत्त्वं, निखिलव्रह्माण्डस्य च भाषातत्त्वम् । निखिलब्रह्माण्डस्य एका एव भाषाः । तज्ज्ञः सर्वभाषाविद् भवति ।

# पुराणेषु प्रतिमाविज्ञानम्

## मत्स्यपुराणाग्निपुराणयोः आधारेण

डा. गोपालकृष्णदाशः

**प्रतिमाविज्ञानपरिचयः**

भारतीयवाङ्मये अर्चा, विग्रहः, क्रियायोगः बेरः, चित्रसूत्रम् इत्यादिविभिन्नसंज्ञायुतया शिल्पविद्यया स्वेष्टदेवोपासनार्थं काले काले भक्तः शिल्पी वा तद्देवरूपकल्पनं करोति। आधुनिकाध्ययनपरम्परायाम् 'Iconography' पुरातत्त्वाध्ययने अत्यन्तपुपादेयं विज्ञानम्। ग्रीक्भाषायाम् 'ikon' अथवा 'eikon' शब्दस्यार्थो भवति देवस्य महापुरुषस्य वा चित्रे भास्कर्ये वा आकारनिर्माणम्। कस्यचिद् देशस्य उपासनभित्तिकधार्मिककलाया वैशिष्ट्यम् एतादृशे विज्ञाने स्पष्टं विलोक्यते। भित्तिषु, गुहायाम्, मन्दिरागारेषु, पट्टे वा चित्रणेन प्रतिमाखोदनेन एतादृशशिल्पविज्ञानस्य निरवच्छिन्नधारायाः आलेख्यं समुपलभ्यते।

ऋग्वेदे (V. III. ४,५) 'नृपेशस्' शब्दस्य प्रयोगः प्रतिमाविज्ञानं सङ्केतयति। निरुक्ते सप्तमाध्याये देवतोपपरीक्षायाम् पुरुषाकृतयश्चेतनादेवता इत्यपि प्रसङ्ग आयाति। पाणिनीयाष्टाध्याय्यां प्रतिमायाः कल्पना समक्षमायाति। तत्र 'जीविकार्थे चापण्ये' (V. ३. ९९) इति सूत्रानुसारम् अपण्यभूतानां वासुदेवशिवस्कन्दविष्णुदेवानां प्रतिमाज्ञानं पुरस्क्रियते। तत्रापि 'इवे प्रतिकृती' (V. ३. ९६) इति सूत्रस्योपरि महाभाष्यकारः शिवस्कन्दविशाखानां प्रतिकृतौ यथाक्रमं शिवः, स्कन्दः विशाखः इति प्रयोगः दृश्यते न तु शिवकः, स्कन्दको विशाखको वा दृश्यते। शिल्परत्ने, अंशुमद्भेदागमे, योगसूत्रे, षड्विंशब्राह्मणान्तर्गते अद्भुतब्राह्मणे, वैखानसागमे, पाञ्चरात्रागमे, तन्त्रागमग्रन्थेषु च प्रतिमाविज्ञानस्य प्रासङ्गिकतया पुङ्खानुपुङ्खतया वा विवेचनं दृष्टिपथमायाति। सुप्राचीनात् कालात् बााणलिङ्गस्य शिवलिङ्गस्य, वासुदेवस्य, शालग्रामस्य उपासनाविषये प्रमाणानि पुष्कलानि सन्ति।

भारतस्य सांस्कृतिकनिधिरूपेण पुराणानि धर्मधाराया चलदितिहासभूतानि सन्ति। लोके वेदे शास्त्रे च यानि तत्त्वानि स्वीकृतानि तेषां साक्षात् परिपोषं कुर्वन्ति पुराणानि। प्रतिमाविज्ञाने मत्स्यपुराणस्य अग्निपुराणस्य विष्णुधर्मोत्तरपुराणस्य च योगदानम् उल्लेखयोग्यम्। विष्णुधर्मोत्तरपुराणस्य चित्रसूत्रं परमं वैशिष्ट्यं भजते। एतेषां पुराणानां प्रतिमाविज्ञानविषयाणां संकलनमावश्यकम्। दृष्टान्तरूपेण मत्स्यपुराणाग्निपुराणयोः सामान्यप्रतिमाविज्ञानस्य तुलनार्थम् उद्देश्यकोष्ठकं संलग्नमस्ति। तत्तद्ग्रन्थभागस्य परिचयात्मकोऽशः सामान्यप्रतिमाविज्ञानस्य सविशेषप्रतिमविज्ञानस्य च सामञ्जस्यं वैषमञ्जस्यं च दर्शयिर्ष्यात।

**प्रतिमाया उपादानानि**

मत्स्याग्निपुराणयो: प्रतिमायाउपादानविषये भेदो दृश्यते। मत्स्यपुराणे स्थायिप्रतिमाया अग्निपुराणे स्याय्यस्थायिप्रतिमाभेदस्य उपादानानि गृहीतानि दृश्यन्ते। मत्स्यपुराणे सौवर्णी, राजती, ताम्री, रत्नमयी, शैली, दारुमयी, लोहमयी,रीतिकाधातुयुक्ता, ताम्रकांस्यमयी, शुभदारुमयी देवतार्चा प्रशस्यते।[१] अग्निपुराणे मृण्मयी, दारुघटिता, लोहजा, रत्नजा, शैलजा, गन्धजा, कौसुमी इति सप्तधा देवतार्चा ।[२] मत्स्यपुराणे सौवर्णी, राजती, ताम्री, रीतिकाधातुयुक्ता, ताम्रकांस्यमयी इति देवतार्चा विशेषतो वर्णिता। अग्निपुराणे मृण्मयी, गन्धजा, कौसुमी इति विशेषताश्चर्चिता। अग्निपुराणे वर्णितानाम् एतासां तिसृणां निमित्तानुसारं तात्कालिकोपयोगिताऽस्ति। पूजानन्तरम् एतासां विसर्जनं क्रियते।

अग्निपुराणे शिलासंग्रहप्रसङ्गे 'पाण्डुरा ह्यरुणा पीता कृष्णा शस्ता तु वर्णानाम्'[३] इति शिलावर्णा: प्रशस्ता:। पर्वताभावे भूमिखननं क्रियते। प्रतिमानिर्माणार्थम् एतादृशवर्णशिलानामभावे सिंहविद्यया वर्णापादनं विधीयते। तत्र शिलायां शुक्लरेखाग्रया कृष्णरेखाग्रया सिंहहो मत:।[४] एवं च अगतिकगतितया विधानं निरूपितम्। तदनन्तरं शिलासंग्रहार्थं वनयागविधिरनुष्ठीयते। शिलासंग्रहानन्तरं प्रासादस्योत्तरे पूर्वमुखीं वा उत्तराननां शिलां संस्थाप्य सम्पूज्य बलिं च दत्त्वा मध्यसूत्रं स्थापयित्वा शिल्पी शिलां नवधा विभज्य अर्चानिर्माणं कुर्यात्।[५]

**ऊर्ध्वमानम्**

ऊर्ध्वमानकल्पनायां मत्स्यपुराणस्य वर्णना व्यवस्थिता। अत्र नवतालमानं वर्णितम्। मौलित आरभ्य पादं यावदत्र वर्णनमस्ति। अग्निपुराणेऽपि नवतालमानं वर्णितम्। तत्र मुकुटादारभ्य जङ्घापर्यन्तं नवतालमानं निरूपितम्। वस्तुत: मुकुटस्य योजनेन दशतालमानं शोभनीयमिति चित्रे दर्शितम्। नवतालमाने अष्टोत्तरैकशताङ्गुलं मानम्। दशतालमाने चतुर्विंशत्युत्तरैकशताङ्गुलं मानं सुपरिकल्पितम्।

**(क) नवतालमानम् मत्स्यपुराणानुसारम्**

| | | |
|---|---|---|
| मुखम् | एकोभाग: | द्वादशाङ्गुल: |
| ग्रीवा | | चतुरङ्गुला |
| तत: हृदयम् | एको भाग: | द्वादशाङ्गुल: |
| तस्मादधो नाभि: | एको भाग: | द्वादशाङ्गुल: |
| नाभेर्निम्नत्वे विस्तरत्वे | | अङ्गुलम् |

---

१. मत्स्यपुराणम्; २५८.२०-२१

२. अग्निपुराणम्; ४३.९b-१०a

३. तत्रैव; ४३.१२

४. तत्रैव; ४३.१४

५. तत्रैव; ४४.१-२

| | | |
|---|---|---|
| नाभेरधो मेढ्रं यावत् | एको भाग: | द्वादशाङ्गुल: |
| ऊरु | भागद्वयम् | चतुर्विशत्यङ्गुलम् |
| जानुनी | " | चतुरङ्गुले |
| जङ्घे | " | चतुर्विशत्यङ्गले |
| पादौ | " | चतुरङ्गुलौ |
| मौलि: | " | चतुर्दशाङ्गुल: |
| | | अष्टोत्तरैकशताङ्गुलम् (१०८) |

(ख) मुकुटादारभ्य पादं यावद् दशतालमानं चित्रे प्रदर्शितम्

**सूत्राणि**

एतद् विहाय अर्चानिर्माणार्थम् अग्निपुराणे सूत्राणि कल्पितानि। सूत्राणां मानेन शिल्पयामङ्गप्रत्यङ्गादिमानं सुस्पष्टतया व्यवस्थितं भवति। पादे सूत्रद्वयम्, जङ्घामध्ये एकम्, जानुभागे सूत्रद्वयम्, ऊरुमध्ये एकम्, मेढ्रे एकम्, कट्याम्, एकम्, मेखलाबन्धसिद्ध्यर्थं नाभ्याम् एकम्, हृदये एकम्, कण्ठे सूत्रद्वयम्, ललाटे एकम्, मस्तके एकम्, मुकुटोपरि एकम्, ऊर्ध्वं सप्त (उष्णीषकेशभ्रूअक्षिनासिकातलमुखप्रान्तग्रीवोपरिभागेषु, कक्षात्रिकान्तरेण षट् (पुटवक्त्रंवाह्यनेत्रमुखपार्श्वकर्णकक्षा:), सकलशरीरसमविभाजकमेकं मध्यसूत्रमिति सूत्राणि संयोज्यानि। एवं सूत्रसंयोजनमानेन अङ्गप्रत्यङ्गमानं निर्दोषं स्यात्।

**विस्तारायामा:**

उभयो: पुराणयो: तत्तदंशदर्शनेन यो निष्कर्ष उपलब्ध: तत्र तु बाहुल्येन सामञ्जस्यं दृश्यते। नारीप्रतिमाया अष्टतालमानं कर्तव्यम्। स्तनकटिदेशे सामान्यो व्यतिक्रमो दृश्यते। साधारणतया वासुदेवप्रतिमा आदर्शभूता दृश्यते। एवं पुराणेषु यत्र प्रतिमामानवर्णनमस्ति समेषां सङ्कलनेन आङ्गलभाषया, हिन्दीभाषया चानुवादेन सह समावेशेन नवीनग्रन्थस्य योजना प्रस्तूयते। तस्योपोद्घातरूपेणाध्ययमिदं प्रस्तुतम्॥

## THE NAVATĀLA IMAGE

The height of an image is said to be Navatāla, १०८ Aṅgulas as follows:

## TĀLA-MĀNA ICONOMETRY

### ऊर्ध्वमानम् (Height Measures)

| Sanskrit Name | Modern Name | Unit of Māna |
|---|---|---|
| १. मुखम् | Mukha is the face, not mouth mouth-from chin to the top of the forehead. | १२ Aṅgulas (अंगुल) |
| २. ग्रीवा | Neck from chin to the collar bone. | ४ Aṅgulas |
| ३. हृदयम् | From collar-bone to the heart of thorase. | १२ Aṅgulas |
| ४. हृदयादानाभेः | Upper half of the abdomne From the heart to the navel | १२ Aṅgulas |
| ५. नाभिबिलम् | The hole of the navel | १ Aṅgula |
| ६. मेढ्रमूळम् | From umblious to external genital organ. | १२ Aṅgulas |
| ७. ऊरु | From pubis to keep-cap | २४ Aṅgulas |
| ८. जानुनी | Knes-caps | ४ Aṅgulas |
| ९. जङ्घा | Legfrom Knee-cap to ankle | २४ Aṅgulas |
| १०. पाद | Foot from ankle to sole | ४ Aṅgulas |
| | Total | =१०८ Aṅgulas |
| | | = ९ Vitastis |
| | | ९Tāla measures= |
| | | =८१"or ६'-९" |

## विस्तारमानम् (WIDTHWISE MEASURES)

### (पृथुव = विस्तर = Width)

| | | |
|---|---|---|
| ११. मौलि: | Distance between the Two temple across the fore head | १४ Aṅgula |
| १२. ललाट: | Ht. Of the fore head | ४ Aṅgla |
| १३. ऊर्ध्वनासा | From root of the nose to the tip | ४ Aṅgula |
| १४. नासाग्रत: ओष्ठम् | From nostril to lip | २ Aṅgula |
| १५. अधरोष्ठत: हनुत: | From lips ot the chin | २ Aṅgula |
| १६. ललाटस्यायाम: | Length of the two-eye-brows | ८ Aṅgula |
| १७. भ्रुव: आयाम: | Length of the two-eye-brows | ८ Aṅgula |
| १८. भ्रुवोर्लेखा | Width of the brows in the Middle portion. | १/२ Aṅgula |
| १९. अक्ष्णो: आयाम-विस्तारौ | Lenght of the eye width of the eye | २ Aṅgula |
| २०. मध्योन्नतोदरं अक्षि | The eye-ball should be Convex | |
| २१. रक्तान्ते अक्षिणी | Internal and external canthas should be red. | |
| २२. दृष्टि: | In the centre of the eye-ball Is the pupil — 1/5th of eye-ball | १/५ of the ball |
| २३. भ्रुवोर्मध्ये नासामूलमू | Distance between the inner ends of the eye-brows and root of the nose | २ Aṅgula |
| २४. नासाग्र: | Tip of the nose | १ Aṅgula |
| २५. नासापुटम् | Oblique walls of the nostrils | १ Aṅgula |
| २६. नासाविलम् | Each nostril or nasal onifice | १/२ Aṅgula |
| २७. कपोलौ | Cheeks should be raised from The base of the ear | २ Aṅgula |

| | | |
|---|---|---|
| २८. हन्वग्रः | Chin should be projecting | १ Aṅgula |
| २९. हनूविस्तारः | And its width | २ Aṅgula |
| ३०. उत्तरोष्ठम् | Thickness of the upper lip | १/२ Aṅgula |
| ३१. सृक्किणी | The distance between the centre Of the lips of the angle of the Mouth | २ Aṅgula |
| ३२. कर्णमूलम् | Distance between the angle of The mouth and base of the ear | ६ Aṅgula |
| ३३. कर्णौ (ऊर्ध्वमानम्) | Vertical length of the ear | ४ Aṅgula |
| ३४. कर्णभ्रूदूरता | Distance between the outer end of the eyebrow and the year. | ४ Aṅgula |
| ३५. कर्ण-पार्श्वम् | Vertical height of the lobule and its width. | २ Aṅgula |
| ३६. कर्णयोरुपरि मस्तकभागः | From the centre of the ear to the mid-point of the head | १२ Aṅgula |
| ३७. ललाटपृष्ठभागः | Distance between the lower part of the fore head and the occipital region. | १८ Aṅgula |
| ३८. शिरोगतपरीणाहः | Cirumference of the head | ३६ Aṅgula |
| ३९. सकेशनिचयः | Girth circum ference of the head along the hair | ४२ Aṅgula |
| ४०. केशान्तात् हनुका | From middle print of the hair-tine up to the tip of the chin. | १६ Aṅgula |
| ४१. ग्रीवामध्यपरीणाहः | Circumference of the neck at its broadest part. | २४ Aṅgula |
| ४२. ग्रीवापृथुत्वम् | Transverse diameter of the neck | ८ Aṅgula/or १/३ of No. ४१ |

| | | |
|---|---|---|
| ४३. स्तनयोरन्तरम् | Distance between the (Nipple line) And ग्रीवासुत्त (Neck-line) | १२ Aṅgula |
| ४४. स्तनयो: मण्डलम् | Distance black pigmented area round the nipple. | २ Aṅgula |
| ४५. चूचुकौ | Thickness and height of the nipples | १/४th Aṅgula = २ Yava |
| ४६. वक्ष:स्थलम् | Front of the chest | २४ Aṅgula |
| ४७. बाहुमूलस्तनान्तरकक्षे | Distance between the nipples and Middle axillary line | ६ Aṅgula |
| ४८. पादौ | Lenght of the foot | १४ Aṅgula |
| ४९. अंगुष्ठ | Toe | ३ Aṅgula |
| ५०. अंगुष्ठाग्रपरीणाह: | Circumference of the tip of the toe | ५ Aṅgula |
| ५१. प्रदेशिनी | Index finger | ५ Aṅgula |
| ५२. मध्यमाङ्गुलि: | Middle finger | Less by १/६th part. |
| ५३. अनामिका | Ring-finger | Less by १/८th part |
| ५४. कनिष्ठा | Small-finger | Less by १/८th part |
| ५५. गुल्फौ | Ankles | Aṅgula |
| ५६. पार्ष्णि: | Ht. Of head | २ Aṅgula |
| ५७. अंगुष्ठ | Circumference of Thumb | २ Aṅgula |
| ५८. प्रदेशिनी | Circumference of Index finger | ३ Aṅgula |
| ५९. कनिष्ठिका | Circumference of small finger | less by १/८th part |
| ६०. जङ्घाग्र-परीणाह: | Circumference of the lower end | १४ Aṅgula |

| | | |
|---|---|---|
| ६१. जङ्घामध्य: | Circumference of the middle | Less by Portion le १८ part |
| ६२. जानुमध्य: | Cicumference of the knee-cap | Aṅgula |
| ६३. जानूच्छ्रय: | Ht. Of the knee-cap | Aṅgula |
| ६४. मण्डलम् | Circumference of the knee-cap | ३ Aṅgule |
| ६५. उरुमध्यपरीणाह: | Circumference thigh in | २८ Aṅgule |
| ६६. उरूपरिष्ठपरीणाह | Circumference in the upper part | ३१ Aṅgula |
| ६७. वृषणौ | Serotum | ३ Aṅgula |
| ६८. मेढ्रपरीणाह: | Male Organ | ६ Aṅgula |
| ६९. मणिबन्ध: | Glans penis | Less by २ pat |
| ७०. केशरेखा | From glans penis of public hair | less by Circumference of the glan ४ part |
| ७१. मणिकोश: | Penis | ४ Aṅgula |
| ७२. कटि: | Buttock | १८ Aṅgula |
| ७३. स्त्रीकटि | Female buttocks | २२ Aṅgula |
| ७४. स्तनौ | Female breasts | १२ Aṅgula |
| ७५. नाभिमध्यपरीणाह: | Circumference at the navel | ४२ Aṅgula |
| ७६. पुरुषकट्यां वेष्टनम् | Male girdle at navel | ५५ Aṅgula |
| ७७. स्कन्धौ | Shoulder | ६ Aṅgula |
| ७८. ग्रीवा | Neck | ८ arigula |
| ७९. भुजयो: आयाम: | Length of the arms | ४२ Aṅgula |
| ८०. बाहुशिखर: | Top of shoulder measures | From neck of the postneriorend १६ Aṅgula |

| | | |
|---|---|---|
| ८१. बाह्वपर्यन्तभागः | Distance from the shine of the Scapala to the elbow | ८ Aṅgula |
| ८२. बाहुद्वितीयपर्व | Distance from the elbow to the Wrist | ७ Aṅgula |
| ८३. बाहुमध्यपरीणाहः | Circumference of the middle of Arm | १८ Aṅula |
| ८४. प्रबाहुः | Circumference of the forearm | १६ Aṅgula |
| ८५. अग्रकरः | Wrist | ६ Aṅgula/ Kalās |
| ८६. करतलम् | Palm | ७ Aṅgula |
| ८७. मध्यामाङ्गुलिः | Middle finger | ५ Aṅgula |
| ८८. अनामिका | Ring finger | less by १/७th |
| ८९. अंगुष्ठपरिणाहः | Circumference of Thumb | ४ Aṅgula |
| ९०. मध्यमामध्यभागः | Middle of the middle finger | २ Aṅgula |
| ९१. केशवल्ली | Distance from the scapula to the knape or the point of *veṇī* | १० Aṅgula |

# अग्निपुराणोक्तानि विज्ञानतत्त्वानि

डॉ. दशरथ द्विवेदी

आत्मा पुराणं वेदानामित्युक्तिर्यथार्थमुद्‌घाटयन्ती पुराणानां महत्त्वमागूरयति । वेदोक्तविषयाणां सम्यगुपबृंहणं पुराणेष्वेव दृश्यते । चेन्नालिखन्महामुनिर्व्यासः पुराणानि वेदमहिमा विजृम्भितोऽभविष्यत् किम् ? विकासमध्यारूढस्य वैदिकसमाजस्याऽऽवश्यकतापूर्तौ विरचितं विविधविषयवैविध्यजुषं वैदिकवाङ्मयं समालोड्य पुराणकर्तारः समाजोपयोगिनः तांस्तान् विषयान् ज्ञानविज्ञानोपेतान् तेषु तेषु पुराणेषु तथाऽलिखन् यथाहर्निशं नित्यनैमित्तिकव्यापाराः सहजतया प्रचलेयुः । पुराणेष्वन्यतममग्निपुराणं, सर्गश्च प्रतिसर्गश्चेत्यादि पुराणलक्षणोपेतमपि व्यावहारिकजीवनागतसमस्यानां समाधानं विदधातुं नानाविषयान् तथा न्यरूपयद्यथाध्ययनेन तेषां सम्यगनुष्ठानेन च जीवने सौकर्य्यं समायाति, सर्वाः क्रियाः सर्वेषां ब्राह्मणादीनां सुसम्पन्नाः सिद्धाः भवन्ति, वापीकूपाऽऽरामदेवालयनगरपुरग्रामव्यवस्था व्यवस्थिता भवति, सर्वेषां भूतानां स्थावरजङ्गमात्मकानां सुरक्षा भवति, गवाश्वगजादीनां मानवानां सिद्धमन्त्रौषधादिपरिज्ञानपरिशोधपर्युपयोगादिभिरायुरारोग्यं सम्पद्यते, नृत्यगीतनाट्य-काव्यादीनां ललितकलानां तथाच व्याकरणज्योतिषछन्दः प्रभृतीनां शास्त्राणां परिज्ञानमुपजायते । किमधिकमुक्तेन अग्निपुराणं नानाविषयाणामाकर इव प्रतिभाति, भारतीय संस्कृतेर्निधिः, चातुर्वर्ण्यचातुराश्रम्येष्टकर्तव्याकर्तव्यकर्मव्यवहारादीनां प्रकाशकमिदं पुराणमिहाग्निवत्सर्वविषयकाभासकमस्ति किलाग्निपुराणम् ।

परापरविद्ययोः यद्यपि परैव प्रधाना, यतो हि विश्वमेव जगत् तदीयविजृम्भणमात्रमत एव जगतः सर्वा वृत्तयः प्रवृतयो वा विज्ञानरूपाः । तथाप्याधुनिकयुगे सामान्यतो येषां विषयाणां विज्ञानसमुदाये परिगणनं क्रियते तेषु कतिपयानां येषामासूत्रणं दृश्यतेऽग्निपुराणेतान् सङ्केतयामि । भौतिकविज्ञानविषयेषु-जगत्सृष्टिः,[१] भुवनकोशवर्णनम्,[२] कालगणना[३] ज्योतिर्विज्ञानम्,[४] समाजविज्ञानेषु वर्णाश्रमास्तथा च व्रतोपवासेष्टापूर्त्यादियोषयाः,[५] राजनीतिविज्ञानेराजधर्माः,[६] षाड्गुण्यम्, व्यवहारदिव्यदायसीमादण्डाभिषेकशस्त्रज्ञानादिचिन्ता,[७] वास्तुविज्ञाने

---

१. अग्निपुराणम् द्रष्टव्यमत्र अध्यायाः क्रमेण १-१७ तथा २०३

२. तत्रैव, १०८-१२२,

३. तत्रैव १२१

४. तत्रैव १२२

५. द्र. अग्निपुराणम्- अध्यायः १५०-२१२

६. तत्रैव २१८-२२८ तथा २४२

७. तत्रैव २४९-२६२

वास्तुगृहप्रासादपुरनगरलक्षणस्थापनप्रतिष्ठादिक्रिया:,[१] शरीरविज्ञानेशरीरावयनाडीचक्रपुरुषलक्षणादीनि,[२] वनस्पतिशास्त्रे-वृक्षायुर्वेद:,[३] नानौषधय:, जन्तुविज्ञानेनगाश्वरत्नादिलक्षणानि,[४] गवाश्वगजादिरोगास्तदुपचारास्तत्सम्बन्धिसिद्धौषधय:,[५] जनोपयोगिसर्वरोगहरायौषधानि,[६] सिद्धौषधनानारोग हरौषध[७]मन्त्रौषधमृतसंजीवन[८] सिद्धकरयोगरसाय नादिप्रकारा,[९] दष्टचिकित्सा[१०]विषहृन्मन्त्रौषधं[११] गोनसादिचिकित्साप्रभृति[१२] विज्ञानविषया अग्निपुराणस्य तेषु तेषु यथायथं विप्रकीर्णाध्यायेषु सुस्पष्टास्पष्टविस्पष्टतयोपलक्ष्यमाणास्तेषां सम्यगध्ययनेनेदानीं बह्वीभ्य आधुनिकविभीषिकाभ्यस्त्राणं भविष्यतीति मन्यते । दिशानिर्देशार्थं कांश्चनैव सङ्केतयामि ।

### भौतिकविज्ञानम्

ब्रह्मण: नवसर्गा: सञ्जाता:, जगन्मूलहेतवस्तेषु महतस्तन्मात्राणामिन्द्रियाणाञ्चैक सर्ग इति प्राकृतसर्गास्त्रयो वैकृताश्च पञ्च स्थावरात्मक: मुख्य:, तिर्यक् स्रोतस ऊर्ध्वस्रोतसोऽर्वाक्स्रोतस वैकृताच्च क्रमश: स्थावरा:, तिर्यञ्च: देवा: मनुष्याश्च भवन्ति, सात्विक- तामसतयाऽष्टमोऽनुग्रहसर्ग: नवमश्च कोमार इत्येते प्राकृतास्त्रयो वैकृताश्च षडिति नवसर्गा आग्नेये निगदिता: । अत्र नित्यनैमित्तिकादयोऽपि विवर्णिता: सन्ति, यस्मिन् नित्यशोऽनुजन्मत: प्रलयान्तं जायमानानां देवदेवर्षिवृन्दानां सृष्टिर्निरूपिताऽस्ति ।[१३] जगत्सर्गप्रसङ्गे सांख्यानुसारं सृष्टिवर्णनं कुर्वन्नपि पुराणकार: वैशिष्ट्यं स्वकीयमुद्भावयति—**द्विधाकृत्वात्मनो देहम् अर्धेन पुरुषोऽभवत्। अर्धेन नारी तस्यां स ब्रह्मा वै चासृजत्प्रजा: ॥**[१४] अपि च—**आपो नारा इति प्रोक्ता आपो वै नरसूनव: ॥ अयनं तस्य ता: पूर्वं तेन नारायण: स्मृत: । हिरण्यगर्भमभवत्तदण्डमुदकेशयम् ॥** इति प्रथितचरं सृष्टिप्रकारमुल्लिखन् हिरणमयाण्डं द्विधा विभज्य विभुर्दिवं भुवंश्च सृष्ट्वाऽन्तराले गगनं निर्माय दिक्कालमन इन्द्रियक्रमेण दिव्यमर्त्यतिर्यगादिसर्गं चकारेति न्यरूपयत् पुराणकृत् ।[१५] भुवनकोशवर्णनप्रसङ्गेऽग्निपुराणकार: द्वीपान्, समुद्रान्, गिरीन्, भारतं तत्स्थकु-

---

१. तत्रैव ९२-२०६

२. तत्रैव २४३ तथा ३७०

३. तत्रैव २८२

४. तत्रैव २९४

५. तत्रैव २८७-२९३

६. तत्रैव २८०

७. तत्रैव २७१

८. तत्रैव २८३

९. तत्रैव २८५

१०. तत्रैव २८१

११. तत्रैव २९५

१२. तत्रैव २९७-२९९ अध्यास्तत्रैव द्रष्टव्या: ।

१३. प्राकृतो वैकृतैश्चैव कौमारो नवमस्तथा। —— दैनन्दिनीयादान्तरप्रलयादनु। जायन्ते यत्रानुदिनं नित्यसर्गो हि स स्मृत: ।अग्निपुराणम् २०/६-८

१४. तत्रैव १८ ।१६-१७ ।

१५. तत्रैव, १८ ।६-१५ ।

लपर्वतान् नदीश्चेति सर्वं विशदीचकार—**जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो महान्। कुशः क्रौञ्चस्तथा शाकः पुष्करश्चेति सप्तमः ।। ... जम्बूद्वीपो द्वीपमध्ये तन्मध्ये मेरुरुच्छ्रितः ।... भारतं प्रथमं वर्षं ततः किं पुरुषं स्मृतम्। हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज !**[१] इत्येवमादि चित्तावहं भारतदिवर्णनं तत्रग्निपुराणात् प्राप्यते।

**वास्तु विज्ञाने** — प्रासादलक्षणप्रसङ्गे; क्षेत्रविभागः, भित्तिस्तदुच्छ्रायः, शिखरप्रमाणम्, मण्डपनिर्माणम्, गर्भगृहमानम्, विस्तारः, गोपुरमित्यादि कथं कीदृक्च विधेयमिति सम्यग् वर्णयित्वा देवताप्रतिष्ठाविधिस्तत्पूर्वञ्चे-ष्टकादीनां प्रमाणं नामानुस्मरणपूर्वकं पूजनादिविधानञ्च ग्रन्थकृन्न्यरूपयत् कस्य देवस्य कीदृशी पिण्डिका, स्वरूपं, वस्त्राभरणशस्त्रादिकञ्च कथङ्कारं विधेयमिति सर्वं तत्रैव विभिन्नाध्यायेषु समासूत्रयत् ।[२]गृहवास्तुविधानेच— **'सामान्यान्यगृहं वक्ष्ये सर्वेषां सर्वकामदम्। एकद्वित्रिचतुःशालमष्टशालं यथाक्रमम् ।।** इत्युक्त्वा एक शालातोऽष्टशालकसामान्यगृहरचना प्रकारमारोलिखन् पुराणकृहस्य विस्तारायामविभागकक्षादिविभागपूर्वकं मुख्यद्वारादीनां यथादिशं फलान्यालोच्य नगरादिवास्तुविधानमकरोत्। तत्र च नगरविधानाय योजनं योजनार्धं तदर्धं वा स्थानमादाय प्रकारं कृत्वा चापाभं वज्रनागाभं वा गजादिगमनार्हं द्वारं विधाय के कुत्र स्थाप्या इति वदतीत्थम्—**आग्नेये स्वर्णकर्मारान् पुरस्य विनिवेशयेत् ।। दक्षिणे नृत्यवृत्तीनां वेश्यास्त्रीणां गृहाणि च।** नटानां प्रकाशितम् यथाहि—**चक्रिकादीनां कैवलादेश्च नैऋते ।। रथानामायुधानां च कृपणानां च वारुणे। शौण्डिकाः कर्माधिकृताः वायव्ये परिकर्मिणः ईशाने च वणिग्जनाः ।।** [३]एवमेवआग्नेयेबलाध्यक्षाःबलानिच,काण्डारान्नैऋते, पश्चिमे महामात्यान् कोषकारान् कारुकांस्तथा चोत्तरद्विजाधिष्ठितान् दण्डनायकान्न्यसेत्। एवमेव ब्राह्मणादिवर्णाः, देवायतनानि, राजप्रासादं, शालाः, भवनानि, शयनभोजनपूजनादिगृहाणि कुत्र कस्याञ्च दिशि शुभावहानि [४] भवन्तीति सर्वं यथाशास्त्रं विवेचितमग्निपुराणे।

भौतिकविज्ञानसम्बद्धं ज्योतिषशास्त्रसम्बन्धग्निरुपणं पुराणकारः तत्रैकविंशत्यध्याये सविस्तरमऽकरोत् —**ज्योतिशास्त्रं प्रवक्ष्यामि शुभाशुभनिवेदकम्। चातुर्लक्षस्य सारं यज्ज्ञात्वा सर्वविद्भवेत्।** इति प्रतिपादयनद्र विवाहे ग्रहाणां, द्विर्द्वादशत्रिकोणसमसप्तैकाधिपप्तत्रिकोणक्षेत्रपमैत्यादिविषयास्तेषाञ्च शुभाशुभफलं विचार्य, विवाहपुंसवनचूडाकरणान्नप्राशनताम्बूलभक्षणरुग्णस्नानोपवीतसमावर्तनाध्ययनधनुर्वेदज्ञानदानगृहारम्भनौघट्ट-वपनयात्रादिविषयाणां नक्षत्रवारमासलग्नग्रहस्थित्यादेर्शुभाशुभफलान्यपि सम्यङ् न्यरूपयत्।

---

१. तत्रैव, द्रष्टव्याः १०८ अध्यायस्य श्लोकाः।

२. प्रासादं संप्रवक्ष्यामि सर्वसाधारणं शृणु। चतुरस्त्रीकृतं क्षेत्रं भजेत्षोडशधा बुधः॥_ प्रासादगर्भमानं वा कुर्वीत मुखमण्डपम्।_ प्रासादात्पादहीनं तु गोपुरस्योच्छ्रयो भवेत्। अग्निपुराणम् व ४२/१-२६ तथाध्यायाः ३३—प्रतिमादिलक्षणम् - ५४ अध्यायाः। तथा चाध्यायः १०४।

३. तत्रैव १०६-५-९।

४. तत्रैव,१०६-१-२४,एवमेव २४७ तमेऽध्यायेऽपि वास्तुलक्षण निगदितम्।

!१ कालगणनाख्योऽग्रिमोध्याय:सर्वत:येषु ज्योतिर्विदागणितस्य च विषय इति नास्ति मे तस्य विवेचने शक्ति: । !२ शरीरविज्ञानार्थं नाडीचक्रं विवृत्य क्व, क: प्राण:, शरीस्मिन्च कश्च देव:, योगार्थ-कथं प्राणानायम्य कुण्डलिनीजागरणादिकं विधेयमित्यादि विचिच्य, योगारुढस्य प्रासादावाप्ति:— स्थूलसूक्ष्मपर इति प्रासादत्रयमुल्लिख्य कथञ्च तल्लाभ इति सर्वं पुराणकार: न्यरूपयत् — नाडीचक्रं प्रवक्ष्यामि यत्ज्ञानाज्ज्ञायते हरि: । नाभेरधस्ताद्यत्कन्दमङ्कुरास्तत्र निर्गता: ॥ द्वासप्ततिसहस्राणि नाभिमध्ये व्यवस्थिता: । तिर्यगूर्ध्वमधश्चैव व्याप्तं ताभि: समन्तत: ॥ चक्रवत्संस्थिता ह्येता: प्रधाना दश नाडय: । इडा च पिङ्गला चैव सुषुम्णा च तथैव च ॥ गान्धारी हस्तजिह्वा च पृथा चैव यशा तथा । अलम्बुषा हुहुश्चैव शंखिनी दशमी स्थिता ॥ .... नाग: कूर्मोऽथ कृकरो देवदत्तो धनञ्जय: । प्राणस्तु प्रथमो वायु: दशानामपि स प्रभु: ॥... उत्तरं दक्षिणं ज्ञेयं वामं दक्षिणसंज्ञितम् । मध्ये तु विषुवं प्रोक्तं पुटद्वयविनि:सृतम् ॥—अजया नाम गायत्री ब्रह्मविष्णुमहेश्वरी ।— चन्द्राग्निरविसंयुक्ता आद्या कुण्डलिनी मता । हृत्प्रदेशे तु सा ज्ञेया अङ्कुराकारसंस्थिता ॥ सृष्टिन्यासो भवेत्तत्र....... ब्रह्मणो मध्ये स्थानं कण्ठे विष्णु: समाश्रित: । तालुमध्ये स्थितो रुद्र: ललाटे तु महेश्वर: ॥ प्रासादं नादमुत्थाय शततन्तुजपेद्यदि । सूक्ष्म: स्थूल: परश्चेति प्रासाद: कथितो मया । ... प्रासादं यो न जानाति पञ्चमञ्च महानुतम् । । अष्टत्रिंशत्कलायुक्तं न स आचार्य उच्यते । !३ इति ।शुक्रादिसंयोगाज्जायमानस्यशिशो:शरीरावयवानां, गर्भकाले योनिदूषकानां कफादीनां विकृति:, गर्भस्य विकासे बाधकानां वर्णनमग्निपुराणस्य सप्तत्युत्तर त्रिशत तमेऽध्याये (३७०) द्रष्टव्यमायुर्वेदस्य विवेचनं तत्रास्ति । एवमेव स्त्रीपुरुषाणां आकारसौन्दर्याङ्गसौष्ठवादि त्रित्वारिशंच्चतुश्चत्वारिंशदधिकाद्दशतसंख्ययो: - द्रष्टव्य: (२४३-२४४ अध्याये) — 'पुंसां च लक्षणं वक्ष्ये स्त्रीणां चैव शुभाशुभम् ।... धन्यस्य मधुरावाणी गतिर्मत्तेभसन्निभा ।... शस्ता स्त्री चारुसर्वाङ्गी मत्तमातङ्गगामिनी । गुरूरुजघना या च मत्तपारावतेक्षणा ॥ सुनीलकेशी तन्वङ्गी विलोमाङ्गी मनोहरा समभूमिस्पृशौ पादौ संहतौ च तथा स्तनौ ॥ नाभि: प्रदक्षिणावर्ता गुह्यमश्वत्थपत्रवत् । गुल्फौ निगूढौ मध्येन नाभिरङ्गुष्ठमानिका ॥ जठरं न प्रलम्बं च रोमरुक्षा न शोभना । नर्क्षवृक्षनदीनाम्नी न सदाक्लिहप्रिया ॥

राजशास्त्रधर्मशास्त्रविषयको विचारस्तत्रातिविस्तरेण सुव्यवस्थितरीत्या च साङ्गोपाङ्गतया विवेचितो लभ्यते, राजसहाया: अमात्या:, सेनापति:, दूता: सान्धिविग्रहिकादय:, रक्षका:, सूदाध्यक्षा:, धनाध्यक्षा:, गजाश्वपत्याद्यध्यक्षा:, सभासद:, अनुजीविनश्च के कीदृशा: भवेयु: स्थाप्या वेति सर्वं विचार्य, दुर्गनिवेश:, प्रयाणम्,

१. षडाष्टके विवाहो न नच द्विर्द्वादशे स्त्रिया: । न त्रिकोणे ह्यथप्रीति: शेषे च समसप्तके ॥
द्विर्द्वादशे त्रिकोणे च मैत्री क्षेत्रपयोर्यदि । भवेदेकाधिपत्यं च ताराप्रीतिरथाऽपि वा ॥
तथाऽपि कार्य: ......न तु षष्टके पुन: । गुरुक्षेत्रगते सूर्ये सूर्यक्षेत्रगते गुरौ ।
विवाहं न प्रशंसन्ति कन्यावैधव्यकृद् भवेत् ॥ तत्रैव १२१/१-५ तथा समग्रोऽध्याय: ।

२. तत्रैवाध्यायोद्रष्टयो:,१२२ तम:/तत: १३९ अध्यायपर्यन्तं ज्योति:शास्त्रं विवेचितमस्ति ।

३. अ.पु. अध्याय: २१४ ।

४. अ.पु. २४३ — २४४ अध्यायौ ।

तत्सम्बन्धिशकुनादीनि, षाड्गुण्यम्, रणदीक्षादिविषयान्[१] सम्यगालोड्य दण्डादीनां विचारं कृतवान् पुराणकृत्। सन्दर्भेऽस्मिन् प्रायश्चित्तादीनामपि निरूपणीयत्वम्।[२]

पुराणेऽस्मिन् आयुर्वेदविचारो यत्र वृक्षपशु-(गवाश्वगजादीनां) मनुष्यप्रभृतीनां चिकित्सौषधयो विवेचिताः सन्ति अत्यन्तमुपादेयाः वैज्ञानिकाश्च प्रतिभान्ति। वृक्षायुर्वेदमधिकृत्य धन्वन्तरिर्वदति यत् गृहस्योत्तरे प्लक्षः, पूर्वस्यां बटः, याम्ये त्वाम्रः पश्चिमे चाश्वत्थवृक्षः शुभावहो भवति। कण्टकद्रुमाः दक्षिणदिशायां भवेयुः। चन्द्रं प्रपूज्य ध्रुवसंज्ञकहस्तमूलादिनक्षत्रेषु वृक्षाणां रोपणं कार्यम्। यथोक्तनक्षत्रेषु तेषां सेकार्थं जलाशयपुष्करिणी-तडागान् कारयित्वा अरिष्टाशोकपुंनागशिरीषप्रियंग्वशोक कदलीजम्बूबकुलदाडिमादिवृक्षान् रोपयेत्। ग्रीष्मे सायं-प्रातः, शीते दिनान्तरे, वर्षासु चावर्षणे सति रात्रौ वृक्षाः सेक्तव्याः। रोपणे तेषामन्तरं तु विंशतिहस्तात्मकर-मुत्तमम्, षोडशहस्तात्मकं मध्यमं द्वादशहस्तान्तरं त्ववरम् भवति। घना वृक्षाः विफला भवन्ति। विफलद्रुमान् विडङ्गघृतपङ्काक्तान् विधाय शीतजलेन सिञ्चयेत्। फलनाशे तु कुलत्थैर्माषैः, मुद्गैर्यवैस्तिलैर्घृताक्तपयोभिः सेकः कार्यः। यवचूर्णतिलादिभिः श्रितसेकेन फलपुष्पाणि समायान्ति। मत्स्यजलेन शाखिनां वृद्धिर्भवति, विडङ्गतिलोपेतं मात्स्यमांसं दोहदायोपकल्यते।[३] — वास्तुलक्षणाध्याये वृक्षारोपणविधिः, सेकक्रिया, दोहदाप्तिसाधवानि चेति सर्वं सविस्तारं निरूपिततमस्ति। ततोऽग्रिमेऽध्याये (२४८) पुष्पादिपूजनप्रसङ्गे— मालतीमल्लिकायूथीपाटला-करवीरपावन्तीअतिमुक्तकर्णिकारकुरण्टककुब्जकतगरनीपबाणतिलककुन्द तमालादीनाम्, पत्रार्थं तु बिल्वशमी-भृङ्गराजतुलसीकेतकीनां पत्रपुष्पार्थञ्च तथा च पद्मादीनां विष्णवे समर्पणं तत्राग्निपुराणे निर्दिष्टम्।

अग्निपुराणस्य चिकित्साशास्त्रं विशिष्टमहत्त्वपूर्णं, विशदं विशोधनीयं च विद्यते। त्रिंशदध्यायपरिमितं तत्रस्थम् आयुर्वेदविज्ञानं प्रशस्यतमम्। तत्र च तावत् सिद्धौषधानां, सर्वरोगहरौषधानां, रसादीनां, नानारोगहरौष-धानां, मन्त्रौषधानां, मृतसंजीवनसिद्धयोगानां च विवेचनं निर्व्यूढम्। ज्वरे लङ्घनादि कारयित्वा, विरेचनं विधाय षडहे तिक्तकयोगं पाययेत्। ततः जीर्णषष्टिकनीवारयवादिपटोलकादीनां संसेवनं कारणीयमिति। ज्वरगुल्मोदर-कुष्ठमेहराजयक्ष्माश्वासकासश्वासहिक्काग्रहणीवातक्षतंमूत्रकृच्छ्रोरुस्तम्भवातशोणितनासारोगकृमिजशिरोवेदना कर्णशूलक्षतश्वित्रक्षिरोग केशपालित्यव्रणसर्पदष्टवृश्चिकदंशदिनाष्टहराणाम्, आयुर्वृद्धिकाराणां चौषधानां, पेयभक्ष्यरसयोगान्नमधुमांसादीनां सर्वरोगहराणां मन्त्रसिद्धौषधानां स्वरूपं प्रयोगविधिञ्च पुराणकारो न्यरूपयत्[४] रोगविशेषे खाद्यमखाद्यं पेयमपेयं च निरूययन् पुराणकारः रोगाणां प्रकारान्, तेषां शमनप्रक्रियाः, विनिर्दिश्य

१. तत्रैव द्रष्टव्याः अध्यायाः - २१८-२४२

२. तत्रैवाध्यायाः २४९-२६१।

३. अरिष्टाशोकपुंनागशिरीषाः सप्रियंगवः॥
अशोकः कदली जम्बूस्तथा बकुलदाडिमाः। सायं प्रातस्तु घर्मान्ते शीतकाले दिनान्तरे॥
वर्षारात्रौ भुवः शोषे सेक्तव्या रोपिता द्रुमाः। उत्तमा विंशतिर्हस्ताः मध्यमा षोडशान्तराः॥
स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम्।– विडङ्गतण्डुलोपेतं मात्स्यं मांसं हि दोहदम्॥ तत्रैव २८२।१-१४।

४. २६९।१-६३।

वातकफप्रकृतिकानां जनानां, त्रिदोषाणं कस्मिन् काले वृद्धिर्शमनं वा जायते इति सर्वं न्यरुपयत्। तांश्चात्र सङ्केतमात्रेणैवोल्लिखामि।

व्याधयश्चतुर्धा भवन्ति—शारीरा; मानसाः, आगन्तुकाः सहजाश्चेति। ज्वरकुष्ठाद्याः शरीराः, क्रोधाद्याः मानसाः, विघातोत्तथा आगन्तुकाः, क्षुज्जरादयश्च सहजाः भवन्ति। पुराणकारः शारीरागन्तुकनाशाय प्रथमं तावत्सूर्यादिवासरेषु वासरानुसारं देयं दानम्, हवनादिकं, बलिप्रदानम्, मानसोपशान्तये च विष्णुस्तवादिपाठं भेषजतयोपदिश्य वातपित्तकफदोषरसधातूपचयापचयविधीन् हेतूंश्चाभाष्य वैद्यं शास्ति यद्देशं, बलं, पीडां, शक्तिं, कालं, प्रकृत्यादिकं विदित्वैव चिकित्सा कार्या। चिकित्सकेन प्रथमं हरिगोद्विजचन्द्रार्कसुरादीनामर्चा कार्या, अनन्तरं प्रार्थना विधेया, ततश्च चिकित्सा[१] कर्तव्या। स्तुतिप्रकारश्चेत्थमस्ति—

'ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलाऽनलाः। ऋषयश्चौषधिग्रामा भूतसङ्घाश्च पान्तु ते म नागानां भैषज्यमिदमस्तुते'[२] ॥

अनन्तरं वात्तपित्तकफादयः किंमात्मकाः, मधुराद्याः, के कस्य शमनकाः, वर्द्धयितारः, समत्वापादकाः, कस्मिन् काले चयापचयोपगताः भवन्तीति सर्वं न्यरूपयत्। कफादिप्रकृतिकाः कीदृशान् स्वप्नान् पश्यन्ति, किमाकाराश्च दोषविशेषाच्छादिताः भवन्तीति वैज्ञानिकदृशा पुराणकृदकथयत्—

'वृद्धिः समानैरेतेषां विपरीतैर्विपर्ययः। रसाः स्वाद्वम्ललवणाः श्लेष्मला वायुनाशनाः ॥

**शिशिरे च वसन्ते च निदाघे च तथा क्रमात्।**
**चयप्रकोपप्रशमाः कफस्य तु प्रकीर्तिताः ॥**
**निदाघवर्षारामौ च तथा शरदि सुश्रुत।**
**चयप्रकोपप्रशमाः पवनस्य प्रकीर्तिताः ॥**

मेघकाले च शरदि हेमन्ते च तथा क्रमात्। चयप्रकोप्रशभाः तथा पित्तस्य कीर्तिताः ॥ .... रोगा हि सर्वे जायन्ते वेगोदीरणधारणैः। अन्नेन कुक्षेर्द्वावंशावेकं पानेन पूरयेत् ॥ आश्रयं पवरनादीनां तथैकमवशेषयेत्। व्याधेर्निदानस्य तथा विपरीतमथौषधम् ॥ व्योमगश्च तथा स्वप्ने वातप्रकृतिरुच्यते। अकालपतितः क्रोधी प्रस्वेदी मधुरप्रियः ॥ स्वप्ने च द्वीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते। दृढाङ्गस्थिरचित्तश्च सुप्रभः स्निग्धमूर्धजः ॥ शुद्धाम्बुदर्शी स्वप्ने च कफप्रकृतिको नरः। तामसा राजसाश्चैव सात्विकाश्च तथा स्मृताः ॥ स्निग्धोष्णमन्तमभ्यङ्गन्तैलं यानादि वातनुत्। आज्यं क्षीरं सिताद्यं च चन्द्ररश्म्यादि पित्तनुत् ॥ सक्षौद्रं त्रिफलातैलं व्यायामादि कफापहम्। सर्वरोगप्रशान्त्यै स्याद्विष्णोर्ध्यानं च पूजनम् ॥'[३]

---

१. तत्रैव, २८० ।१-१२
२. तत्रैव, २८०/१३-१४
३. अ० पु०, २० ।१५-४८ ।

अग्रिमे चाध्याये रसादिलक्षणात्मके रसप्रकरान् तेषां निर्माणप्रक्रियां रोगोपशान्तये तेषां प्रयोगं मर्दनादिकं च विस्तारेण पुराणकृन्न्यरूपयत् — 'ओषधीनां पञ्चविधा तथा भवति कल्पना । रसः, कल्कः, शृतः, शीतः फ्राण्टश्च मनुजोत्तम ॥ कल्क आलोडिताद् भवेत् । क्वथितश्च शृतो ज्ञेयः शीतः पर्युषितो निशि ॥ सद्योऽभिशृतं पूतं यत्तत्फाण्टमभिधीयते । पुराणकारोऽग्रे चतुर्ष्वध्यायेषु नानारोगहराणामौषधानां, मन्त्रौषधानां, मृतसंजीवनाकरयोगानां मत्युञ्जयकल्पानां चौषधानां'[१] शताधिकाष्टषष्टिश्लोकैः प्रतिपादितम् ।

अनन्तरमग्निपुराणे गजाश्वलक्षणं तयोः वैज्ञानिकपद्धत्या सारं समाभाष्य तयोर्जायमानान् रोगानुक्त वा तेषां चिकित्साः प्रकाशिताः च गजाश्वयोर्निरूपितमस्ति । दिङ्मात्रमेवात्र तदुल्लिखामि । दीर्घहस्तः, महोच्छ्वासः, सहिष्णवः, विंशतिनखोपेतोऽथवाष्टादशनखोपेतः शीतकालमदाहितः, दक्षिणोन्नतदन्तो, बृंहितो जलदोपमः, विपुलकर्णाहितः, हस्ती शुभावहो भवति । एवमेव हस्तिन्योऽपि सुलक्षणास्तत्र निगदिताः । गजपालको दक्षः स्याद्यश्च गजानां स्वभावं प्रकृतिं ज्ञात्वा तेषां पाण्डुशिरःशूलपादरोगवेपथ्वतीसारमूत्रभङ्गत्वग्दोषकृमिरोगक्षतक्षयगुल्मादिरोगाणामौषधिप्रकारं विज्ञाय तेषां चिकित्सां करोतु [२]— 'गजलक्ष्मचिकित्सां च लोमपाद वदामि ते । दीर्घहस्ता महोच्छ्वासाः प्रशास्ते सहिष्णवः ॥ गोमूत्रं पाण्डुरोगेषु रजनीभ्यां घृतं द्विज । आनाहे तैलसिक्तस्य निषेकस्त शस्यते ॥ बालबिल्वं तथा लोध्रं धातकी सितया सह । अतीसारविनाशाय पिण्डीं भुञ्जीत कुखरः ॥ क्षतक्षपकरं पामं मांसरसः शुभः । मुद्गौदनं व्योषयुतमरुचौ च प्रशस्यते ॥

तत्र गजरोगोपशान्तये गजशान्तिरपि विहिता । यथाहि—

'गजशान्तिं प्रवक्ष्यामि गजरोगोपशान्तये । विष्णुं श्रियं च पञ्चम्यां नाममैरावतं यजेत् ॥ ब्रह्माणं शङ्करं विष्णुं शक्रं वैश्रवणं यमम् । चन्द्रार्कौ वरुणं वायुमग्निं पृथिवीं तथा च खम् ॥तिर्यग्भावं समुत्सृज्य दिव्यं भावमनुस्मर । देवासुरे पुरा युद्धे श्रीगजस्त्रिदशैः कृतः । ऐरावतसुतः श्रीमानरिष्टो नामवारणः । श्रीगजानां तु तत्तेजः सर्वमेवोपतिष्ठते ॥ तत्तेजस्तव नागेन्द्र दिव्यभावसमन्वितम् । उपतिष्ठतु भद्रं ते रक्ष राजानमाहवे ॥' एवमादिविधानं विज्ञानं च तत्रान्वेष्टव्यम् ।

एवमेवाश्ववाहनसारस्य वैज्ञानिकीं दृष्टिमारेखयन् तत्र पुराणकृदश्वायुर्वेदविषयं विवृतवान् । हयानामादिवाहने नक्षत्रमासर्तुदिनानि परिवर्ण्य, ते कथं सार्या, सर्वं विवेचितम् कथं कुत्र वा शरीरे तेषां प्रतोदो विधेयोऽविधेयो वेति ।

अश्विनीश्रवणं हस्तमुत्तरा त्रितयं तथा । नक्षत्राणि प्रशस्तानि हयानामादिवाहने ॥ अभ्यासादभियोगाच्च विना शास्त्रं स्ववाहकः । स्नातस्य प्राङ्मुखस्यास्य देवान्वपुषि योजयेत् ॥ प्रणवादीन नमोऽन्तेन स्ववीजेन यथाक्रमम् । ब्रह्मा चित्ते बले विष्णुर्वैनतेयः पराक्रमे ॥"[३]

---

१. तत्रैव द्रष्टवा अध्यायाः २८३-२८६ ।

२. तत्रैव, २८७/१-३३

३. तत्रैव, २८८/१-६६

एवं क्रमेणाश्वस्य मनसि ब्रह्माणं, विष्णुं बले, पराक्रमे गरुडं, पार्श्वे रुद्रान्, बुद्धौ गुरुम्, मर्मसु विश्वेदेवान्, दृगावर्ते दृशि च इन्द्रर्कौ, कर्णयोरश्विनौ, अग्निं जठरे, स्वेदे स्वधाम्, जिह्वायां वाचं, वेगे वायुं, रोमकूपेषु नक्षत्राणि, हृदि चान्द्रमसीं कलाम्, तेजस्यग्निं, श्रोण्यां रतिं, ललाटे जगत्पतिं, हेषिते ग्रहान्, उरसि वासुकिम्, आयोज्य अश्वस्य दक्षिणकर्णे उपोषितः सादी एवं प्रकारेण जपेत् — "हयगन्धर्वशजस्त्वं शृणुष्व वचनं मम । गन्धर्वकुलजातस्त्वं मा भूस्त्वं कुलदूषकः ॥ द्विजानां सत्यवाक्येन सोमस्य गरुडस्य च । रुद्रस्य वरुणस्यैव पवनेन बलेन च ॥ xxx कुले जातस्त्वमरबानां मित्रं मे भव शाश्वतम् ॥ एवं यथोक्तदेवान्कर्णे प्रजाय योग्यसादी कथमश्वं शिक्षयेत् कस्मिन् काले, केन प्रकारेण शनैः शनैः वाजिनं मित्रत्वे नयेदिति सविस्तरं वर्णयित्वा वर्णितवान् अग्निपुराणकारः ।"[१]

अश्वानां वैज्ञानिकं लक्षणमप्युक्तं तत्र । अश्वाश्च हीरदन्ताः, विदन्ताः, करालाः, कृष्णतालुकाः, कृष्ण-जिह्वाः, यमजाः, अजातमुष्काः, द्विशफाः, शृङ्गिणः, त्रिवर्णाः व्याघ्रवर्णाः,खरयवर्णाः, भस्मवर्णाः, जातवर्णाः, काकदिनः, श्वित्रिणः, काकसादिनः, खरसाराः, वानराक्षाः, कृष्णसटाः, कृष्णगुह्याः, कृष्णप्रोथाः, शूकाः, तित्तिरसंत्रिभाः, विषमाः, श्वेतपादाः, ध्रुवावर्तरहिताः, अशुभावर्तयुताः, इत्यादिप्रकाराः भवन्तीति विविच्य पुराणकारोऽग्रे निरूपयति किमा-वर्तकाः कीदृशा वाऽश्वाः शुभावहाः विजयप्रदा भवन्ति । तथा च तेषां चिकित्साविधयोऽप्यत्रौषधयोऽप्यत्र निगदिताः । श्रमशूलातिसारकार्श्यज्वरकासशोधरक्तमेहशिराशोधव्रणरक्तस्रावाक्षिरोगकण्डूरक्तकफवातपित्त-श्लेष्मादिविकारेषु देया औषधयः, परिचर्याः, यथार्तुविधेयभेषज्यादिकान् सर्वानश्वविषयकचिकित्साव्यापारानत्र वैज्ञानिकदृशाऽवर्णयत् महामतिः पुराणकारः — न रोगा पीडयिस्यन्ति दूर्वाहारं तुरङ्गम् ।[२] गोमहिमा, गवायु-र्वेदोऽप्यग्निपुराणस्यान्ते प्रशस्तो वैज्ञानिको ज्ञानप्रदोऽस्ति । यथा — "गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः ॥ शकृन्मूत्रं परं तासामलक्ष्मीनाशनं ध्रुवम् । गवां कण्डूयनं वारिदानं शृङ्गस्य मर्दनम् ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । षडङ्गं परमंपाने दुःस्वप्नादिनाशवम् ॥ रोचन विषरक्षोघ्नी ग्रासदः स्वर्गगो गवाम् । यद्गृहे दुखिता गावः स याति नरकं नरः ॥ परगोग्रासदः स्वर्गी गोहितो ब्रह्मलोकभाक् । गोहदानात्कीर्तनाद्रक्षां कृत्वा चोद्धरते कुलम् ॥ गवां श्वासात्पवित्रा भूः स्पर्शनात् किल्बिषक्षयः । एकरात्रोपवासश्च श्वपाकमपि शोधयेत् । शावः प्रतिष्ठा भूतानांगावः स्वत्ययनं परम् । अन्नमेव परं गावो हविरुत्तमम् ॥ ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ॥[३] एवमत्र द्वाविंशतिश्लोकेषु गोमहिमानमाभाष्य तेषां चिकित्सा प्रकारश्च तत्र निगदिताः ।

गोषु जायमानाः शृङ्गामयकर्णशूलदन्तशूलमुखररोगहद्बस्तिवातशूलातीसारकोष्ठवद्धताक्वासश्वास-भग्रताकफादिरोगाः, चिकित्साविघियश्चात्रायुर्वेददृशा वर्णिताः सन्ति । येषामुपयोगेनातिरुंजा पीड्यमाना अधुना गावः एलोपैथीत्रासान्मुक्ताः सुस्थाः दुग्धप्रदाश्च भविष्यन्ति । गवां ग्रहादिदोषनाशायाऽपि तत्र धूपनादिक्रिया, देवार्चा मन्त्रचिकित्सादानादिक्रियाश्चापि विहिताः । तद्यथा — "शृङ्गामयेषु धेनूनां तैलं दद्यात्ससैन्धवम् । शृंग-

१. तत्रैव, २८८/१३-६६

२. तत्रैव, २८९/१-५६

३. तत्रैव २८२/१-२२

वेरवलामासीकल्कसिद्धं समाक्षिकम् ॥ ग्रहादिगद- नाशाय एष धूपो गवां हितः । घण्टा चैव गवां कार्या धूपेनानेन धूपिता (देव दारु वचा मांसीगुग्गुलैर्हिङ्गुसर्षपाः) ॥ हिग्वालाः पद्मयत्रेषु कुम्भेष्वग्रौ च होमयेत् । क्षीरवृक्षस्य समिधः सर्षपाक्षततण्डुलान् ॥[१]

एवमग्निपुराणे नराश्वगजगोवृक्षायुर्वेदान् सल्लक्षणान्, रोगांस्तदुपचारांश्च ग्रहमन्त्रोमौषधादिप्रकारैः प्रतिपादयन् पुराणकारः सङ्केतयति यत् सर्वे रोगाः केवलमौषधैरेव न शमकाः भवन्ति । आधुनिकचिकित्सकाः औषधमात्रेणोपचारान् कुर्वन्तो नरपशुवृक्षान् निरुजो न कुर्वन्ति, प्रत्युत शोकामयान् वर्द्धयन्त्यपीति पुराणकृद्वैज्ञानिकदृष्टिरनुसर्तव्या । एवमग्रेऽपि पुराणकारः दष्टचिकित्साध्याये सर्पभेदांस्तेषां मुख्यानां नामानि, विप्रादिसंज्ञां, कुलानि, अण्डप्रदानकालं, शावकवर्द्धनकालम्, पूर्णतां, दन्तान् विषदन्तांश्च, निवासस्थानानि, दंशस्थानानि, दंशनकालविशेषाणां फलम्, निदानम्, चिकित्सादि—प्रकारांश्चातिविस्तरेणनिरूपितवान् । कांश्चनात्र ततः श्लोकानुद्धरामिः—'शेषवासुकितक्षाख्याः कर्कटाजौ महाम्बुजः । शङ्खपालश्च कुलिक इत्यष्टौ नागवर्यकाः ॥ दशाष्टपञ्चत्रिगुणशतमूर्धान्वितौ क्रमात् । विप्रौ नृपौ विशौ शूद्रौ द्वौ द्वौ भागेषु कीर्तितौ ॥ तदन्वयः पञ्चशतं तेभ्यो जाता असंख्यकाः । फणिमण्डलिराजीलवातपित्तकफात्मकाः ॥ व्यन्तरा दोषमिश्रास्ते सर्पा दर्वीकराः स्मृताः । रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ॥ षण्मासान्मुच्यते कृत्तिं जीवेत्षष्टिसमाद्वयम् । नागाः सूर्यादिवारेशाः सप्त उक्ता दिवानिशि ॥ एकद्विबहवो दशा दष्टं विद्धं च खण्डितम् ॥ अदंश मवगुप्तं स्यात् दंशमेवं चतुर्विधम् । त्रयेद्व्येकक्षता दंशा वेदनारुधिरोल्बणा ॥सतोदो ग्रन्थितो दंशः । सविषोऽन्यस्तु निर्विषः । देवालये शून्यगृहे वल्मीकोद्यानकोटरे ॥ विषरोगास्तु सप्त स्युर्धातोर्धात्वन्तराप्तितः । विषदंशो ललाटं यात्यतो नेत्रं ततो मुखम् । आस्याच्च वचने नाडीन्धातून् प्राप्नोति हि क्रमात्[२] ॥' एवं बहुविस्तरेण दष्टचिकित्साभिहिता । तद्यथा—जपनाद्विषहानिः स्यात् औषधं जीवरक्षणम् । साज्यं सकृद्रसं पेयं द्विविधं विषमुच्यते ॥ जङ्गमं सर्पदष्टादि शृङ्गादि स्थावरं विषम् ॥[३]

एवमादि प्रकारेण विषशमनमन्त्रैरौषधिभिश्च दष्टचिकित्सां विस्तरेण न्यरूपयत् पुराणकारः । पुराणेऽसमिन् काव्यनाट्यादिललितविद्यानां यथावसरं वैज्ञानिकं विवेचवमुपलभ्यते । अत्रास्मिन् निबन्धेऽग्निपुराणे निरूपितानां विज्ञानाहितविषयाणां दिङ्मात्रमेवोल्लेखमहमकरवम्, विशेषावधारणं मूलग्रन्थमवलोक्य करणीयम् ।

---

१. तत्रैव २९२/२२-४३

२. तत्रैव,२९४/१-४१

३. तत्रैव,२९५/१-३६

# संस्कृतशिक्षणविधौ संगणकस्योपयोगः

डॉ. दिलीपकुमारकरः

शिक्षा सर्वोत्तमा। क्षेत्रेऽस्मिन् यः यावदुच्चं गच्छति समाजे तस्य स्थानं सम्मानञ्च तदनुगुणं भवेत्। संस्कृतग्रन्थेष्विदानीन्तनानामप्युपयुक्ता अनेके विषयाः निगूढाः सन्ति। आधुनिके प्रपञ्चे एतादृशविषयाणामावश्यकता सर्वैरनुभूयते। एतदर्थमनेके इदानीं संस्कृतशास्त्राणामध्ययने संस्कृतभाषायाश्चाध्ययने विशेषतः औत्सुक्यं प्रकटयन्ति। परन्तु एतादृशानां साहित्यानां शास्त्राणाञ्चाध्यापकाः विरलाः सन्ति। विज्ञानयुगेऽस्मिन् स्मृतेः बुद्धेश्च प्राबल्यं संगणकयन्त्रे एव दरीदृश्यते। पण्डितेषु सत्स्वपि उद्योगिनामेवं छात्राणां कृते चाध्यापनार्थं पण्डितानामवकाश एव न लभ्यते।

अस्यां स्थितौ शास्त्राणां संस्कृतभाषायाश्चावबोधनार्थं गणकयन्त्राणामुपयोगः भवितुमर्हति वा न वेति तत्र तत्र चर्चाः प्रवर्तन्ते। गणकयन्त्राध्युषिते इदानीन्तनसमाजे गणकयन्त्रमाध्यमेन शास्त्राणां भाषायाश्च बोधनं कल्प्यते यदि तदा उद्योगिनामन्येषां कृते लाभः स्यात्। अतः गणकयन्त्रमाध्यमेन शास्त्राणां बोधनार्थं भाषायाश्च शिक्षणार्थमनेके तन्त्रांशाः (Software) संस्कृतसंशोधनसंसदा निर्मिताः।

अनया रीत्या संस्कृतशिक्षणस्य कृते बहुभिः संस्थाभिः बहुमाध्यमतन्त्रांशाः (Multi Media Porgrammes) आरच्यन्ते। एतैः तन्त्रांशैः यद्यपि परम्परया शिक्षणं न भवति तथापि बालाः विनोदमाध्यमेन संस्कृतभाषाध्ययनं कर्तुं शक्नुवन्ति। एतदतिरिच्य, लिपीनां शिक्षणम्, सामान्यव्याकरणस्य तथा कारकादीनां शिक्षणम्, शब्दरूपाणां धातुरूपाणाञ्चाध्ययनम्, छन्दोऽलङ्काराणामध्ययनम्, सन्धिसमासादीनां शिक्षणम्, प्रत्ययोपसर्गाणामध्ययनम्, प्रकृष्टोच्चारणशैलीशिक्षणम्, अन्तर्जाल (Network) माध्यमेन प्रश्नोत्तरपरम्परया शिक्षणम्, दर्शनशास्त्रेषु प्रयुक्तानां पारिभाषिकशब्दानां सम्यग्विश्लेषणं कृत्वा दर्शनानां गोप्यरहस्यस्य समुद्घाटनम्, लेखसंशोधनम्, यन्त्रानुवादस्तथा ग्रन्थालये ग्रन्थानां सम्यग्व्यवस्थापनादि च गणकयन्त्रमाध्यमेन कर्तुं शक्यन्ते।

अस्मिन् प्रबन्धे बालानां विनोदमाध्यमेन संस्कृतशिक्षारम्भस्य कृते तन्त्रांशप्रकारः आलोच्यते।

प्रथमतया विभिन्नानां चित्राणां संग्रहं कृत्वा तेषां वर्गीकरणं करणीयम्। यथा— पुष्पवर्गः, उभयचरवर्गः, सरीसृपवर्गः, कीटवर्गः, गुल्मवर्गः, शस्यवर्गः, शाकादिवर्गः तथा गृहोपकरणवर्ग इत्यादयः। अनन्तरमेतेषां सर्वेषां सांकेतिकीकरण (Coding) मावश्यकम्। तद्यथा—

| वर्गनामानि | संकेतानि |
| --- | --- |
| पुष्पवर्गः | A |
| फलवर्गः | B |
| वृक्षवर्गः | C |
| पशुवर्गः | D |
| जलचरवर्गः | E |
| उभयचरवर्गः | F |
| पक्षिवर्गः | G |
| सरीसृपवर्गः | I |
| कीटवर्गः | J |
| गुल्मवर्गः | K |
| शस्यवर्गः | L |
| गृहोपकरणवर्गः | M |
| | इत्यादयः । |

अनन्तरं सर्वेषु वर्गेषु स्थितानां चित्राणामपि सांकेतिकीकरणमावश्यकम् । स च सांकेतिकीकरणप्रकार इत्थं भवितव्यम्—

| वर्गनामानि | वर्गसंकेताः | वर्गस्थचित्राणि | चित्राणां संकेतानि |
| --- | --- | --- | --- |
| पुष्पवर्गः | A | मन्दारस्य चित्रम् | A.१. |
| | | कमलस्य चित्रम् | A.२. |
| | | चम्पकस्य चित्रम् | A.३. |
| | | | इत्यादयः । |
| फलवर्गः | B | आम्रस्य चित्रम् | B.१. |
| | | दाडिमफलस्य चित्रम् | B.२. |
| | | पनसफलस्य चित्रम् | B.३. |
| | | | इत्यादयः । |

एवं रूपेण सर्वेषां कृते संकेतान् दत्त्वा सचित्रं दत्तांश (Data-base) भागः सन्निवेशनीयः । अनन्तरं वर्गस्थानां वस्तूनां नामानि स्पष्टतयोच्चार्य्य तेषामुच्चारणप्रतिलिपयः (Recorded sound waves) यथा-

चित्रं ससंकेतञ्चात्र दत्तांशभागे सन्निवेशनीया: । अनेन मनोनीतस्य वर्गस्य चित्रेषु यस्य कस्यापि चित्रस्य नाम जिज्ञासमान: बालक: तत्सम्पर्कितस्य पिञ्ज (Button) स्योपरि उट्टयति चेत् तेन चित्रेण साकं लिखितरूपेण स शब्द: तथा तस्य शब्दस्योच्चारणस्वर: युगपदागमिष्यत: ।

अस्मिन्नेव तन्त्रांशे चित्रक्रीडा अपि संयोज्य बालानां शिक्षणं त्रुटिशून्यं वा न वेति ज्ञातुं शक्यते । एतदर्थं चित्रै: साकं तत्सम्पर्कितानामक्षराणामेका सारणी दातव्या । चित्रं दृष्ट्वा बाल: सारण्या अक्षराणि मेलयित्वा चित्रस्य नाम लिखिष्यति । चित्रे स्थितस्य वस्तुन: नाम सम्यक् लिखिष्यति चेदङ्कं प्राप्स्यति नोचेत् सम्यक् नास्तीति गणकन्त्रं दर्शयिष्यति । यथा— अश्वचित्रस्य मनोनयनं कृत्वा सरण्या: अक्षराणि संयोज्य बाल: हस्तीति लिखिष्यति चेत् गणकयन्त्रमेतत् त्रुटिपूर्णमिति दर्शयिष्यति । एतेन बालानां शिक्षाया: परिमापनं कर्तुं शक्यते ।

एतदतिरिच्य द्वितीये पर्य्याये बालानामक्षरशिक्षणार्थमप्यनुरूपतन्त्रांश: निर्मातुं शक्यते । एतदर्थमक्षरै: साकं तेषामुच्चारणशैली स्वरप्रतिलिपिकरण (Voice Recording) माध्यमेन सन्निवेशनीया । वाच: लिपि: (Voice to text) अथवा लिपित: वाक् (Text to voice) परिवर्तनार्थं तन्त्रांशान् निर्माय प्रकृष्टोच्चारणविधे: शिक्षा दातुं शक्यते ।

तृतीये पर्य्याये विद्यालयेषु प्रचलितपाठ्यक्रमानुसारमपि तन्त्रांशान् निर्माय विषया: सहजतया बोधयितुं शक्यन्ते । सर्वासु कक्षासु पाठ्यक्रमानुसारं ये ये विषया: सन्ति तेषां सर्वेषां कृते एक: तन्त्रांश: निर्मातुं शक्यते इति । अनेन गुरुणा विनापि छात्र: गृहे एव उषित्वा विषयाणामध्ययनं कर्तुं शक्नोति । अस्य तन्त्रांशस्य स्वरूपं कीदृशं भवितव्यं इति किञ्चिदालोच्यते ।

प्रथमायां यवनिकायां सर्वासां कक्षानां नामानि आगमिष्यन्ति तस्मादेकस्य चयनं कृत्वा छात्र: तत्र स्थितानि पठिष्यति । एतदर्थं तत्त्वांशभागमेकं (Data-base) निर्माय तस्मिन् कक्षानामानि ससंकेतं सन्निवेश-नीयानि । तद्यथा—

| कक्षानामानि | संकेतानि |
|---|---|
| प्रथमकक्षा | १ |
| द्वितीयकक्षा | २ |
| तृतीयकक्षा | ३ |
| चतुर्थकक्षा | ४ |
| पञ्चमकक्षा | ५ |
| षष्ठकक्षा | ६ |
| सप्तमकक्षा | ७ |
| अष्टमकक्षा | ८ |

| | |
|---|---|
| नवमकक्षा | ९ |
| दशमकक्षा | १० |
| | इत्यादय: । |

एतासु कक्षासु एकां मनोनयनं कृत्वा छात्र: तस्या: कक्षाया: पाठ्यक्रमे स्थितान् विषयान् प्रति गमिष्यति । यवनिकायां तस्यां कक्षायां के के विषया: सन्तीति द्रष्टुं तत्त्वांशभागे ससंकेते सर्वेषां विषयाणां सन्निवेशनमावश्यकम् । तद्यथा —

| कक्षानामानि | कक्षासंकेता: | विषया: | संकेता: |
|---|---|---|---|
| नवमकक्षा | ९ | मातृभाषा | ९.१ |
| | | द्वितीयभाषा (आङ्गलभाषा) | ९.२ |
| | | तृतीयभाषा (संस्कृतभाषा) | ९.३ |
| | | विज्ञानम् | ९.४ |
| | | गणितम् | ९.५ |
| | | इतिहास: | ९.६ |
| | | सामाजिकविज्ञानम् | ९.७ |
| | | भूगोलम् | ९.८ |
| | | इत्यादय: । | |

अनन्तरमेतेषु विषयेषु एकस्य चयनं कृत्वा (छात्र: यत्पठितुमिच्छति) तस्य पठनं कर्तुं शक्यते । मन्यताम् छात्रेण तृतीयभाषाया: (संस्कृतभाषाया:) पठनार्थं चयनं कृतम् तर्हि ये ये विषया: प्रश्नोतराणि च उत्तरत्र यवनिकायामागन्तव्यानि तेषां सर्वेषां स्वतन्त्रासङ्केतान् दत्वा तत्त्वांशभागे सन्निवेशनीयानि । तत्त्वांशभागस्यास्य स्वरूपमेवं भवितव्यम्—

| विषया: | विषयसंकेता: | प्रश्नोत्तराणि | संकेता: |
|---|---|---|---|
| तृतीयभाषा (संस्कृतभाषा) | ९.३ | मूलम् | ९.३.१ |
| | | कठिनशब्दार्था: | ९.३.२ |
| | | क्षुद्रोत्तरमूलकप्रश्नानामुत्तरम् | ९.३.३ |
| | | दीर्घोत्तरमूलकप्रश्नानामुत्तरम् | ९.३.४ |
| | | सन्धि: | ९.३.५ |
| | | समास: | ९.३.६ |

| | |
|---|---|
| प्रकृतिप्रत्यय: | ९.३.७ |
| कारकविभक्ति: | ९.३.८ |
| वाक्यघटनम् | ९.३.९ |
| सरलार्थ:/भावसंप्रसारणम् | ९.३.२० |

इत्यादय: ।

अनया रीत्या न केवलं संस्कृतस्य प्रारम्भिकाध्येतृणां कृते तथा विद्यालये अध्ययनरतानां छात्राणां कृते अपि च वयोवृद्धानां कृते तन्त्रांशान् निर्मीय दर्शनव्याकरणसाहित्यादीनामध्ययनं गृहे एव उषित्वा कारयितुं शक्यते । इत्थं सङ्गणकस्य प्रयोग: संस्कृतशिक्षणे महते उपकाराय कल्पते ।

# सनत्कुमारवास्तुशास्त्रम्

डॉ. विद्वान् ए.वि. नागसम्पिगे

## वास्तुविज्ञानं सर्वकालोपयोगि

सहस्रसहस्रवर्षेभ्यः प्राक्तनाः देवालयाः राजमन्दिराणि गृहाणि चास्मिन् भारते देशे बहोः कालादविनष्टान्येव विलसन्तीत्यानुभविकम्। न चैतद् यादृच्छिकं भवतुमर्हति। अत्र वास्तुतत्त्वशास्त्रानुसारेण निबद्धानि गृहाणि देवालयाश्च भूकम्पादावप्रणष्टाः वास्तुविज्ञानस्य सार्वकालिकतामावेदयन्ति। वास्तुशास्त्रमवश्याध्येयं, विज्ञेयं च सर्वैरपि। वास्तुशास्त्रग्रन्थाः सन्त्यनेकेऽस्मिन् देशे अत्र तु प्राधान्येन सनत्कुमारप्रणीतगृहवास्तुग्रन्थमवलम्ब्य विषयविमर्शः कृतः।

## गृहनिर्माणप्रशस्ताः मासाः

चैत्रमासे गृहनिर्माणे द्रव्यनाशः भयं च। वैशाखे शुभम्। ज्येष्ठे मृतिः। आषाढे पशुनाशः। श्रावणे पुत्रद्धिः। भाद्रपदे पुत्रादीनां रोगभीः। आश्वयुजे कलहः। कार्तिके द्रव्यलाभः। मार्गशीर्षे भयम्। पुष्ये अग्निदाहः। माघे सन्ततिवृद्धिः। फाल्गुने रत्नलाभः। तदुक्तम्—

**गृहसंस्थापनं चैत्रे धनहानिर्महाभयम्।**
**वैशाखे शुभदं विद्यात् ज्येशठे तु मरणं ध्रुवम्॥**

**आषाढे गोकुलं हन्ति श्रावणे पुत्रवर्धनम्।**
**प्रजारोगं भाद्रपदे कलहो ऽश्वयुजे तथा॥**

**कार्तिके धनलाभः स्यात् मार्गशीर्षे महाभयम्।**
**पुष्ये चाग्निभयं विद्यात् माघे तु बहुपुत्रवान्।**
**फाल्गुने रत्नलाभः स्यात् मासानां च शुभाशुभम्॥** स.वा.शा. p.७

## गृहनिर्माणं शुभवासरे कार्यम्

न यस्मिन् कस्मिन् वासरे गृहनिर्माणं कर्तव्यम्, अपि तु प्रशस्त एव। तथा हि — भानुवासरे गृहारम्भे वह्निदाहः। शुक्लपक्षे सोमवासरे गृहारम्भे वृद्धिः। कृष्णपक्षे सोमवासरे कलहः नाशश्च। कुजवासरे तदंशे,

तल्लग्ने स्तम्भप्रतिष्ठादिकरणे गृहदाहः, यजमानस्य मृतिश्च । बुधवासरे ऐश्वर्यवृद्धिः । गुरुवासरे सर्वार्थसिद्धिः । शुक्रे बहुसुखम् । मन्दवासरे चोरभयम् । तस्मात् विहितदिने विहितवासर एव गृहारम्भः कार्यः । तदुक्तम् —

भानुवारे कृतं वेश्म वह्निना दह्यते चिरात् ।
चान्द्रे च वर्धते शुक्ले क्षीयते कृष्णपक्षके ॥

भौमवारे तदंशे वा तल्लग्ने सप्तमेऽपि वा ।
दह्यते (तद् गृहं) शून्यं कर्तुर्मरणमेव चा

बुधवारे धनैश्वर्यं सुखपुत्रसमन्वितम् ।
भृत्यवाहनधान्यानि धनान्याङ्गिसे दिने ॥

भृगुवारे चिरं तिष्ठेत् कर्ता च सुखसम्पदा ।
चिरं तिष्ठेन्मन्दवारे तस्कराणां भयावहः ॥ स.वा.शा. p.७

### योग्यनक्षत्राणि

मृगशीर्षक-हस्ता-रेवती-चित्रा-अनुराधा-उत्तराषाढा-उत्तराभाद्रा-श्रवण-पुनर्वसु-शतभिषा-धनिष्ठा-अश्विनीनक्षत्राणि गृहारम्भाय सुखदानि च । तदुक्तम्—

मृगशिरकरपूषात्वष्ट्रमित्रोन्तराख्य—
श्रवणदितिजलेशावासवे द्रस्रभे च ।
बहुसुतधनवन्तुस्तम्भसंस्थापनं स्यात्
इति भवति मुनीन्द्रो मानवानां गृहाणाम् ॥ स.वा.शा. p.२४

पुष्यरोहिण्यौ प्रशस्ते इत्युक्तं ग्रन्थान्तरे—

नासत्यादितिरेवतीकरगुरुश्रोणत्रयेन्दूत्तरा ।
मित्रत्वष्टृविधातृभेषु सुतदास्तम्भप्रतिष्ठार्थदा ॥ इति ॥ काला. p.९३

उक्तोऽयमर्थः — अन्यत्र च—

रोहिणी चोत्तरास्तिस्रो हस्तं स्वाती पुनर्वसू ।
अनुराधाश्वयुक् सौम्यं वैष्णवं वारुणं मघा ।
चित्ताश्रविष्ठौपौष्णाश्च मनुजेषु प्रशंसिताः ॥ इति ॥ कामिका. p.७०

### भूशोधनम्

यत्र गृहं देवमन्दिरादिकं वा निर्मीयते तत्र भूशोधनं कर्तव्यम् । गन्ध-वर्ण-रस-प्लवैः भूः परीक्षणीया । शैव-वैष्णव-ब्राह्म-ऐन्द्र-औक्ष-भौतिक-असुर-पैशाचक-राक्षस-वायव्य-वारुण-आग्नेयभेदेन भूर्द्वादशविधा । तत्राद्याश्चतस्रः भुवः गृहनिर्माणाय प्रशस्ताः नान्याः । तदुक्तम् —

निर्माणे पत्तनग्रामक्षेत्रादीनां समन्ततः ।
क्षेत्रमादौ परीक्षेत गन्धवर्णरसप्लवैः ।। इति ।। स.वा.शा. p.३०

अश्वत्थ-कपित्थ-अशोक-पद्म-तुलसी-दूर्वादिभिरलङ्कृता भूः 'शैवा' इत्युच्यते । बिल्व-पलाश-कुश-होम्यद्रव्यैः - सुगन्धपूर्णा च भूः 'ब्राह्मी' इत्युच्यते । तिन्दुक-तिन्त्रणी-करञ्जवृक्षेता कण्टकाऽनाकीर्णा मृगपक्षि-शोभिता भूः 'वैष्णवी' इत्युच्यते। कदलीपनस-आम्र-धात्रीवृक्षादिभिरलङ्कृता भूः 'ऐन्द्री' इत्युच्यते। उक्तोऽयमर्थः—

कर्णिकारार्जनाश्वत्थकपित्थाशोकधातकी ।
स्थलारविन्दतुलसी दूर्वाभिर्वा तता मही ।।

विष्णुक्रान्ताखुकर्णाभ्यां शाल्मली गिरिशारिबा ।
कपोतशुकहंसैश्च शैवी सा शुभदा मही ।।

बिल्वैः पलाशैर्दर्भैश्च कुशैश्च हरिणैस्तथा ।
होमद्रव्यैः सुगन्धैश्च भूब्राह्मी शुभदा मता ।।

तिन्दुकैस्तिन्त्रिणीभिश्च करञ्जैर्वेणुभिस्तथा ।
कार्पासार्कजपाभिश्च हंसैः पक्षिमृगैस्तथा ।।

निष्कण्टकैस्तथा वृक्षैः या भूमिस्सहिता भवेत् ।
वैष्णवी भूः समाख्याता शौर्यवीर्यप्रदा नृणाम् ।।

कदलीपनसाम्रैश्च पुन्नागैर्बकुलैस्तथा ।
पाटलैस्सिन्धुवारैश्च तथा चामलकैः पुनः ।।

इन्दीवरैश्च वैश्चैश्च शूद्रैरैन्द्री मही मता ।
पाटल्यगरुगन्धाढ्या धनधान्यसमृद्धिदा ।।

### वास्तुपुरुषपूजा

शैववैष्णवतन्त्रागमग्रन्थेषु वास्तुपुरुषकथा भिन्नैव श्रूयते । वैष्णवतन्त्ररीत्या वास्तुर्वराहरुपिणो हरेः सुतः । देवतैः भूमौ पातितः । चतुरस्त्राकृतिः स्थितश्च । तदुपरि ब्रह्मादयः देवाः सनिहिताः । तान् यथाविधि सम्पूज्य गृहादि निर्मेयम् । तदुक्तम्—

पूजयेद वास्तुपरुषस्योपरिस्थांस्तु सर्वदा ।
देवान् ब्रह्मादिकान् वास्तुर्वराहस्य हरेः सुतः ।
पातितो देवतैर्भूमौ चतुरस्त्राकृतिः स्थितः ।। तं.सा.सं. III. ६७p.७७

शैवग्रन्थेष्वन्यैव कथा श्रूयते —

अन्धकासुरसंहारे क्रुद्धस्य शूलिनः स्वेदबिन्दुः भूमौ पतितः। स्वेदबिन्दुरेव द्यावापृथिवीमभिव्याप्य वास्तुपुरुषरुपेणोदतिष्ठत् सर्वभयङ्करः। ततश्च देवतैर्भूमो पातितः। मन्दिरादिनिर्माणकाले तत्पूजनाय वरश्च देवैः प्रदत्तः। तदुक्तम् —

सङ्ग्रामेऽन्धकरुद्रयोश्च पतितः स्वेदो महेशात् क्षितौ
तस्माद् भूतमभूच्च भीतिजननं द्यावापृथिव्योर्महत्।

तद्दैवैः सहसा निगृह्य भूमावधोवक्क्तृकं
देवानां वचनाच्च वास्तुपुरुषस्तेनैव पूज्यो बुधैः ॥ इति ॥ वा.र p.३८

गृहनिर्माणक्रमः

भूपरीक्षां कृत्वा सार्धपुंमानतस्त्वधः भुवं संशोध्य लोष्टाश्मास्थिविवर्जिते देशे गृहं निर्मेयम्। पूर्वस्यां दिशि स्नानगृह्व कार्यम्। आग्नेये पाकशाला विधेया। दक्षिणस्यां दिशि स्वापशाला। नैऋत्यां दिशि आयुध-शाला। पश्चिमे भोजनशाला। वायव्ये पशुशाला। उत्तरस्यां दिशि द्रव्यनिक्षेपगृहं कार्यम्। ईशान्ये देवमन्दिरम्। तदुक्तम्—

स्नानागारं दिशि प्राच्याम् आग्नेय्यां पचनालयम्।
दक्षिणे शयनागारं नैऋत्यां शस्त्रमन्दिरम्॥

पश्चिमे भोजनागारं वायव्ये पशुमन्दिरम्।
भण्डारं चोत्तरस्यां तु ईशान्यां देवमन्दिरम्॥ स.वा.शा. p.६९

उक्तं चान्यत्र —

स्नानस्य पाकशयनास्त्रभुजेश्च धान्य

भाण्डारदैवतगृहाणि च पूर्वतः स्युः।

तन्मध्यतोऽथ मथनाज्यपुरीष —

विद्याभ्यासाख्यरोदनरतोषधसर्वधाम्॥ मु.चि. १२.२०

वापीकूपतटाकनिर्माणम्

कूपादिनिर्माणम् उत्तरस्यां पूर्वपश्चिमदिशि च प्रशस्तम्। द्वारहीनो जलाशयः कूपशब्देन व्यपदिश्यते। द्वारेणैकेन भूषितः वापिसंज्ञकः। अनेकद्वारविशिष्टा पुष्कलजलाधारा पुष्करिणीत्युच्यते। तदुक्तम् —

द्वारहीनो भवेत्कूपः द्वारेणैकेन वापिका।
नैकद्वारा पुष्करिणी दीर्घाकारा तु दीर्घिका।
कुल्या विधूततोयाश्च तटाकाः परिकीर्तिताः ॥

कूपादिनिर्माणम् आग्नेय-नेऋत्य-वायव्यदिक्षि परित्याज्यम्। उत्तर-पूर्व-पश्चिमदिक्षि प्रशस्तम्। तदुक्तं वराहमिहिरेण —

आग्नेये यदि कोणे गृहस्य वा भवति कूपः।
नित्यं करोति दाहं जलमपि तत्रैव चञ्चलप्रायम्।
नैऋते कोणे बालक्षयं च वनिताक्षयं वायव्ये।
दिक्त्रयमेतत्त्यक्त्वा शेषास्तु शुभावहाः प्रोक्ताः ॥ इति

एवं अन्यत्र च—

स्नानाग्निस्वपिवस्वभोजनपशुद्रव्यामरौकस्थितिं
पूर्वादौ जलमीशितुर्दिशि परं वायोरपाङ्मूत्रकम्।
आल्ये शक्तिभुवो यथारुचि परे गेहस्य दक्षे घट—
द्दाम्बूलूखलचुल्लिकापितृपदप्रक्षालनान्यूचिरे ॥

गृहलक्षणम्

भूपरीक्षां कृत्वा सार्धपुंमानतस्त्वधः भुवं संशोध्य शुचिप्रदेशे गृहादिकं निर्मेयम्। सनत्कुमारवास्तुशास्त्रोक्तदिशा वक्ष्यमाणक्रमानुरोधेन गृहं निर्मेयं भवति।

इशान्य पूर्व आग्नेय

Door

देवमन्दिरम् स्नानगृहम् पाकशाला

Pooja Bathroom Visitors Hall Kitchen

द्रव्यनिक्षेपः स्वापशाला

Guest Room Hall Bedroom

उत्तर दक्षिण

Store Toilet

भोजनशाला

Veranda Dining Hall Room

वायव्य पश्चिम नैरुत्य

**उल्लिखिता ग्रन्थाः**

१. स.वा.शा. — सनत्कुमारवास्तुशास्त्रम् ।

२. कामिका — कामिकागमः ।

३. काला. — कालामृतः ।

४. तं.सा.स — तन्त्रसारसङ्ग्रहः ।

५. वा.र. — वास्तुरत्नावली ।

६. मु.मा — मुहूर्तमार्तण्डः ।

७. मु. चि. — मुहूर्तचिन्तामणिः ।

# गणकयन्त्रमाध्यमेन भारतीयदर्शनशास्त्रस्य अध्यापनम्

डॉ. नारायणपतिः

अत्र संस्कृत संशोधनसंसत्, मेलुकोटे इति अस्यां संस्थायां भारतीयदर्शनशास्त्रमधिकृत्य गणकयन्त्र-माध्यमेन कार्यं प्रचलत् अस्ति । यन्त्रद्वारा भारतीयदर्शनशास्त्रस्याध्यापनं शिक्षणं पुनः तेषु दर्शनेषु पारिभाषिकश-ब्दानां विमर्शः यथा — किम्नाम दर्शनम् ? किं ब्रह्म ? तस्य किं स्वरूपम् ? कः ईश्वरः ? के तस्य प्राप्तेरुपायाः ? अस्मिन् जगति किं शाश्वतं तत्त्वम् ? इयं सृष्टिः कुतः आबभूव ? जीवात्मनः कि स्वरूपम् ? कः पुनर्जायते ? जीवस्य कुत उद्भूतिः ? किं तस्य लक्ष्यम् ? कथं मोक्षावाप्तिः ? कः सृष्टेः कर्ता ? किं जीवस्य कर्तव्यम् ? कश्च जीवनस्य साधिष्ठः पन्था ? इत्यादयोऽनुयोगाः प्रश्नोत्तररूपेण सहजः सुकरः सुस्पष्टश्चेति मत्वा बहु सुलभः तथा स्वतन्त्ररूपेण एकैकस्य दर्शनशास्त्रस्य उपोद्धातः (ग्रन्थपरिचयो) रेखाचित्रमाध्यमेन कृतः । — दर्शनसिद्धान्तः— व्याख्यानम्— टीकाकालः— दार्शनिकपारिभाषिकशब्दानां विवेचनम्— भाषान्तरणमित्यादिक्रमेण यन्त्रेऽस्मिन् निवेश्यन्ते । अस्य तन्त्रांशस्य स्वरूपमित्थमस्ति—

**प्रथमयवनिका (Ist Screen)**

**Next**

**श्रीः**

**Academy of Sanskrit Research**

**Melkote**

**दर्शनमञ्जूषा**

**Teaching Package of Darśanam**

**द्वितीययवनिका (2nd Screen)**

अस्यां यवनिकायां दर्शनशब्दार्थः तस्य भेदो महत्वंवैशिष्ट्यं संक्षेपेण तच्छास्त्रपरिचयरूपेण संस्कृतभाषया साकं भाषान्तरं पठितुं शक्यते । अत्र पञ्च पिञ्जानि सन्ति । एकैकः विषयः स्पष्टं उपक्रमयवनकायां दीयते । एतेन विषयः स्पष्टतया अवगन्तुं शक्यते ।

## Teaching Package of Darśanam

### उपक्रमः

दर्शनशब्दार्थः भेदकर्ता महत्वं वैशिष्ट्यं प्राधान्यं च ।

संस्कृतम्.........

भाषान्तरम्......

पश्चात् Academy of Sanskrit Research अनन्तरम्

**तृतीययवनिका (3rd Screen)**

अस्यां यवनिकायां एकैकस्य दर्शनस्य पूर्णविवरणं स्पष्टतया ज्ञातुं शक्यते यथा— न्यायदर्शनम् , अत्र अङ्कणं क्रियते चेत् तस्य—

उपोद्धा (परिचयः)

कर्ता — कालः सिद्धान्तः ।

व्याख्या— भाष्यं — टीका

पारिभाषिकशब्दाः

संस्कृतभाषया सह भाषान्तरेऽपि पठितुं शक्यते ।

## Teaching Package of Darśanam

### न्यायः वैशेषिकः सांख्यः योगः मीमांसा वेदान्तः

संस्कृतम्.....

भाषान्तरम्....

पश्चात् Academy of Sanskrit Research अनन्तरम्

**चतुर्थयवनिका (4th Screen)**

अस्या यवनिकायां प्रतिदर्शनं पारिभाषिकशब्दानां विमर्शः क्रियते—

कः ईश्वरः

किं ब्रह्म

जीवः

माया

अविद्या

अज्ञानम्

लिङ्गशरीरम् इत्यादयः ।

**Teaching Package of Darśanam**

ईश्वरः स्वरूपम्

ब्रह्म

जीवः संस्कृतम्....

माया ...

प्रकृतिः ....

पुरुषः भाषान्तरम्....

अज्ञानम् .....

अविद्या .....

पश्चात् Academy of Sanskrit Research Exit

अध्ययनाध्यापनविषये सर्वकारेण CALT नाम्नी योजना अधिगृहीता ।

संस्कृतक्षेत्रेऽपि एतादृशः कार्यक्रमः आरम्भणीयः । प्रारम्भिकशिक्षायाः आप्रौढशिक्षं विषयेऽस्मिन् कर्तव्यं प्रभूतं वर्तते ।

अध्यापनेऽपि सङ्गणकस्य उपयोगः भवितुमर्हति । उदाहरणरूपेण अत्र तर्कसङ्ग्रहविषये विहितः प्रयासः प्रस्तूयते । पृथग्रूपेण उपोद्घातः — मङ्गलाचरणम् — उद्देशः विभागः लक्षणम् — परीक्षा टीका — सहायकग्रन्थसूची — तथा भाषान्तरञ्चेति क्रमेण यन्त्रेऽस्मिन् निविष्टम् । जिज्ञासूनाम् उपयोगाय अयं तन्त्रांशः सज्जीकृतः । यन्त्रे अस्य स्वरूपमेवं स्थापितम्—

**प्रथमयवनिका (1st Screen)**

**Academy of Sanskrit Research**

**Melkote**

**तर्कमञ्जूषा**

**Teaching Package of Tarkasaṅgraha**

**अनन्तरम्**

द्वितीययवनिका (2nd Screen)

अस्यां यवनिकायां कार्यक्रमस्य प्रस्तावनया सह ग्रन्थपरिचयः तथा संस्कृतभाषया सह भाषान्तरमपि भवितुमर्हति ।

**Teaching Package of Tarkasaṅgraha**

**प्रस्तावना**

**ग्रन्थपरिचयः**

संस्कृतम्......

भाषान्तरम्.....

पश्चात् Academy of Sanskrit Research अनन्तरम्

तृतीययवनिका (3rd Screen)

अस्यां यवनिकायां ग्रन्थस्य मगंलाचरणम् ।

**Teaching Package of Tarkasaṅgraha**

**मंगलाचरणम्**

**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।**
**बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥**

संस्कृतम्....

भाषान्तरम्....

पश्चात् Academy of Sanskrit Research अनन्तरम्

चतुर्थयवनिका (4th Screen)

अस्यां यवनिकायां ग्रन्थस्य विषयाः पदार्थाः— द्रव्याणि-गुणाः इति एतेषां उद्देशः, विभागः, लक्षणम, परीक्षा, टीका, भाषान्तरञ्च क्रमेण भवति ।

**Teaching Package of Tarkasaṅgraha**

**उद्देशः विभागः लक्षणम् परीक्षा टीका भाषान्तरम्**

**पदार्थः— द्रव्यम् क्रमशः...**

गुणः प्रतीतिः

कर्म विषयत्वं

सामान्यम् पदार्थत्वम्

विशेषः संस्कृतम्....

समवायः भाषान्तरम्.....

अभावः

पश्चात् Academy of Sanskrit Research अनन्तरम्

**पञ्चमयवनिकायाम् (5th Screen)**

अस्या यवनिकायां सहायकग्रन्थसूचीनां ग्रन्थकर्त्रा सह पूर्णविवरणं दीयते ।

**Teaching Package of Tarkasaṅgraha**

**तर्कसंग्रहः— अन्नम्भट्टः— मूलम्**

**पदकृत्यम् — चन्द्रजसिंहः— व्याख्यानम्**

**न्यायबोधिनी — श्रीगोवर्धनः— व्याख्यानम्**

संस्कृतम्....

भाषान्तरम्....

पश्चात् Academy of Sanskrit Research

अतः भारतीयदर्शनशास्त्रस्य सुखबोधाय तर्कसंग्रहप्रारम्भिकजिज्ञासूनां सौकर्याय च गणकयन्त्रस्य प्रयोगः इत्थं बहुधा सम्भवति ।

# पाणिनेः षडङ्गवैदुष्यम्

डॉ. तपनशङ्करभट्टाचार्यः

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।'

तस्य वेदस्य षड् अङ्गानि सन्ति । 'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्' इति एषाम् अङ्गानाम् प्रशंसाप्रसङ्गे शिक्षाग्रन्थे वर्णितम् अस्ति—

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।।

शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ।।

शिक्षाकल्पादिषु षडङ्गेषु स्व-स्व-विषयम् अधिकृत्य सुनिपुणतया वर्णितम्, किन्तु महर्षिः पाणिनिः तस्य अष्टाध्यायीग्रन्थे पाणिनीयशिक्षाग्रन्थे च अन्येषाम् सर्वेषाम् अङ्गानां विषमधिकृत्य आलोचितवान् । षडङ्गेषु पाणिनेः समानः प्रवेश आसीत् ।

शिक्षाग्रन्थः पाणिनिना स्वयं विरचितः, ऋग्वेदस्य अध्ययने पाणिनीयशिक्षायाः अपेक्षास्ति । तत्र उदात्ता-नुदात्तस्वरितप्रचयाख्यस्वरह्रस्वदीर्घप्लुतानुनासिकनिरनुनासिकादिविषयाः आलोचिताः । शिक्षायां वर्णानाम् उच्चारणविधिः प्रोक्ता । कण्ठ्य-तालव्य-मूर्धन्य-ओष्ठ्य-दन्त्यवर्णानां भेदः दर्शितः । जिह्वामूलीयोपध्मानीय-यम-वर्णानाम् अपि वैशिष्ट्यम् दर्शितम् ।

'गीती शीघ्री शिरः कम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ।।

माधुर्य्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्य्यं लयसमर्थञ्च षडेते पाठका गुणाः ।। इति ।

अनयोः श्लोकयोः उत्तमपाठकानां अधमपाठकानाञ्च लक्षणं अभिहितम् । स्वराणाम् उद्भवविषये महर्षिणा सुष्ठु वर्णितम्—

'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्' ॥

वर्णानाम् उच्चारण-विषये उपमाम् आश्रित्य वर्णितम्। तद्यथा—
व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीडयेत्।

भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत् ॥
यथा सौराष्ट्रिकानारी तक्रँ इत्यभिभाषते ॥ इति

अन्यत्र चापिः

मन्त्रहीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्।
ऋग्यजुः सामभिः पूतो ब्रह्मलोके महीयते ॥ इति।

स्वरविषये कल्पविषयेष्वपि आचार्यस्य महज्ज्ञानमासीदिति अनेकैरेव सूत्रैः स्पष्टीभवति। तद् यथा- 'यज्ञर्त्विग्भ्याम् घखञ्'- (५.१.७१)। यज्ञम् अर्हति = यज्ञियो ब्राह्मणः, ऋत्विजम् अर्हति = आर्त्विजीनो ब्राह्मणः। 'यज्ञकर्मण्यजपन्यूंखसामसु'- (१.२.३४) इत्यनेन वर्जयित्वेति स्वरसूक्ष्मं ब्रवीति। 'उच्चैस्तरां वा वषट्कारः' — (१.२.२५) 'तद्वा नासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः'— (४.४.१२५) 'अश्विमानणे'— (४.४.१२६), 'वयस्यासु मूर्ध्नो मतुप्'- (४.४.१२७), इति अग्न्याधानप्रक्रियां निरूपयत्याचार्यः। चयनं नाम सोमयागे उत्तरवेद्यां इष्टका नैकविधाः स्थापयित्वा तत्र आहवनायाग्नेः स्थापनम्। इष्टाकास्थापनकाले मन्त्राः पठनीयाः। तत्र कुत्र के मन्त्राः पठनीयाः इत्यपि सूक्ष्ममुपवर्णितं दृश्यते। एवम् 'ये यज्ञकर्मणि'— (८.२.८८), 'प्रणवष्टेः' — (८.२.८९), 'याज्यान्तः'— (८.२.९०) 'ब्रूहिप्रेष्यश्रोषड्-वौषडावाहानामादेः'— (८.२.९१) 'अग्नीत्प्रेषणे परस्य च' — (८.२.९२) इति सूत्राण्यपि अत्र उदाहरणत्वेन उद्धर्तुं शक्यन्ते। यज्ञकर्मणि 'ये' इत्यस्य या प्लुतिर्विहिता तत्र कल्पसूत्रकारेणाप्युक्तम्— 'आगूर्याज्यादि.... तथोरादी प्लावयेत्' इति। 'प्रणवष्टेः'— इत्यनेन मन्त्रस्य 'टि'- प्रदेशे यः प्रणवो विहितः तदपि 'ऋगन्तम् औंकारं मकारान्तं कृत्वा उत्तरस्या अर्द्धर्चे अवस्येत्'— इत्यनेन कल्पशास्त्रे विहितमस्ति। याज्यान्ते विहिताऽपि प्लुतिः 'याज्यान्तं च' इत्याश्वलायनेन विहिता स्वकीये श्रौतसूत्रे। एवमेव ब्रू३हि प्रे३ष्य श्रौ३षट् वौ३षट् इत्येतेषाम् आदिवर्णस्य प्लुतिः श्रौतसूत्रेषु विहिता वर्तते। एतेनाप्यवगम्यते यद् यज्ञप्रक्रियायाम् पाणिनेः महदेव वैदग्ध्यमासीत्। एवम् 'अनुप्रतिगृणश्च'- १.४.४१ इति सूत्रात् शास्त्रपाठविषये या प्रक्रिया वर्तते सा पाणिनेर्नाविदिता आसीद् इत्येव स्पष्टं प्रतीयते। शास्त्रपाठकाले होता तस्य सहयोगी अन्यो वा कश्चन यथानिर्देशं मन्त्रान् पठति। तस्मै उत्साहप्रदानार्थं 'शंस् भो दैव' इति यद्वाक्यम्

अध्वर्युणा पठ्यते तत् 'प्रतिगर' इत्युच्यते । एवं विधः 'प्रतिगरः' यज्ञानुष्ठाने वर्तते तत् पाणिनिः सम्यग् जानात्येव इति उद्धृतात् सूत्रात् स्पष्टम् अवगम्यते । व्याकरणवेदाङ्गे आचार्यस्य मुख्यप्रवृत्तिः । अतो न तद्विचार्यतेऽत्र—

निरुक्तग्रन्थे शब्दानाम् निर्वचनमेव प्रदर्शितम् । निर्वचनन्तु उदात्तादिस्वरसापेक्षम् गुणवृद्ध्यादिसापेक्षञ्च । यन्निर्वचनम् न व्याकरणानुगतम् उदात्तदिस्वरानुगतं वा न तद् ग्राह्यम् । आचार्यः पाणिनिः प्रकृति-प्रत्यय-विश्लेषणद्वारेण तस्य निर्वचनज्ञानमपि सूचयति । अस्ति चात्र बलवत्तरमेकं प्रमाणम्— 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा'— (५-२-९३), इन्द्रियमित्यन्तोदात्तं शब्दरूपं निपात्यते । रूढिरेषा चक्षुरादीनां करणानाम् । तथा च व्युत्पत्तेरनियमं दर्शयति-इन्द्रशब्दात् षष्ठीसमर्थाल्लिङ्गमित्येतस्मिन्नर्थे 'घच्'— प्रत्ययो भवति, इन्द्रस्य लिङ्गमिन्द्रियम्, इन्द्र आत्मा स चक्षुरादिना करणेनानुमीयते, नाकर्तृककरणमस्ति । इन्द्रेण दृष्टम्— तृतीयासमर्थात् प्रत्ययः आत्मना दृष्टमित्यर्थः । इन्द्रेण सृष्टम् आत्मना सृष्टम्, तत्कृतेन शुभाशुभेन कर्मणोत्पन्नमिति कृत्वा । इत्यादिक्रमेण—सति संभवे व्युत्पत्तिरन्यथापि कर्तव्या, रूढेरनियमादिति, वाशब्दः प्रत्येकमभिसंबध्यमानो विकल्पानां स्वातन्त्र्यं दर्शयति ।

छन्दोवेदाङ्गेऽपि तस्य विशेषेणं अधिकार आसीत् इति अनेकैरेव सूत्रैस्तत् प्रणीतैः प्रतीयते । तद् यथा— 'छन्दोनाम्नि च' — (३.३.३४), विपूर्वास्तृणातेश्छन्दोनाम्नि घञ् प्रत्ययो भवति, यथा 'विष्टारपंक्तिश्छन्दः' । विष्टारबृहतीश्छन्दः ।

'सोऽस्यादिरिति च्छन्दसः प्रगाथेषु'— (४.२.५५) स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । यत् प्रथमासमर्थं छन्दश्चेत् तदादिर्भवति, यत्तदस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति । यथा— पङ्क्तिः आदिः अस्य पाङ्क्तः प्रगाथः । आनुष्टुभः ।

एवम् 'प्रकृत्यान्तःपादमव्यपरे'— (६.१.११५), 'सोऽचि लोपे चेत् पादपूरणम्'— (६.१.१३४), 'प्रसमुपोदः पादपूरणे'— (८.१.६), 'अनुदात्तं सर्वमपादादौ'— (८.१.१८), इत्यादिषु सूत्रेषु महर्षिणा पाणिनिना छन्दोविद्या व्यचारि ।

ज्यौतिषविद्यायाम् आचार्यस्य बुद्धेः प्रसरो दृश्यते । तथा हि सूत्रम्— 'नक्षत्रेण युक्तः कालः'— (४.२.३) तृतीयासमर्थात् नक्षत्रविशेषवाचिनः शब्दात् युक्त इत्येतस्मिन्नर्थे यथाविहितं प्रत्यया भवन्ति, योऽसौ युक्तः कालश्चेत् स भवति । यथा— पुष्येण युक्तः कालः, पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः, पौषी रात्रिः पौषमहः । माघी रात्रिः, माघमहः ।अन्यत्र— 'संज्ञायां श्रवणाश्वत्याभ्याम्'— (४.२.५) इति श्रवणशब्दादश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य लुक् भवति संज्ञायां विषये । यथा-श्रवणा रात्रिः । एवम् 'फल्गुनीप्रोष्ठपदानां च नक्षत्रे'— (१.२.६०) 'छन्दसि पुनर्वस्वोरेकवचनम्'— (१.२.६१) 'विशाखयोश्च'— (१.२.६२) 'तिष्यपुनर्वस्वोनक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्'— (१.२.६३) इत्यादिकमपि द्रष्टव्यम् ।

एवं अशेषप्रतिभासम्पन्नस्याचार्यस्य पाणिनेः वेदाङ्गानां ये ये विषयास्तेषु सर्वेष्वेव विषयेषु सर्वास्वेव वेदाङ्गविद्यासु सुमहानाधिकारः आसीत् इति स्पष्टं प्रतीयते ।

# पाठ्यक्रमस्वरूपम्

डॉ. श्रीपादभट्

सुरभारत्याः पठनपाठनयोः कश्चन हृदयङ्गमः पाठ्यक्रमः समाश्रयणीयः। स च पाठ्यक्रमः सर्वगुणसम्पन्नः सर्वेषां आपण्डितपामराणां चित्ताकर्षकश्च भवेत्।

शिक्षातत्त्वविदः 'शिक्षणमित्युक्ते द्विध्रुवगामीप्रक्रिया' (Education is a bipolar) इति समामनन्ति। यतो हि—

अध्यापकः — शिष्यः

श्रावयति — शृणोति

ग्राहयति— गृह्णाति

अध्यापयति — अधीते

अनन्तरं पाठ्यक्रमस्य समावेशः जातः। व्याख्यानं च संवृत्तम्। उपनिषत्स्वपि प्रमाणयत्यत्र-आचार्यः पूर्वरूपम्। अन्तेवास्युत्तररूपम्। विद्या सन्धिः। प्रवचनं, सन्धानम्, (शिक्षावल्ली, तैत्तिरीयोपनिषत्) इति तस्मादेव त कर्मण्यस्मिन् सम्प्रेषणे श्रवणं, भाषणं, वाचनं, लेखनमिति कौशलचतुष्टयमद्यत्वे पाठ्यक्रमे निर्दिश्यते। अत एव गीर्वाणभाषाध्यापने हृदयङ्गमा इन्द्रियग्राह्यानुपूर्वा शब्दसङ्ग्रहोऽभिनयवैपुल्यं, छात्रचित्ताकर्षकाश्च विषया इत्येतानि तत्त्वान्युपादेयानि।

I. अत्र मास्तु कस्याप्यकारणमन्यथाग्रहः यदाङ्ग्लभाषा-पद्धतेरनुकरणमात्रमिति। यतो हि पाश्चात्त्यानां बलमनोविज्ञानानुसारीणि यान्यनवद्यानि भाषाभ्यासतत्त्वानि तान्योपन्यस्यानि संस्कृतपाठ्यक्रमे न त्वितराणीति अभिप्रायविशेषोऽयमत्र वर्तते। कस्याप्यनवद्य-वस्तुनोऽङ्गीकारो न दोषाय, अपि तु हितायैव भवति। भारतीयैरेषा परिपाटी कदाचिदविकलतया अनुसृता न स्यात्। किन्तु तस्या मूलं प्राचीनदर्शनेषु सन्दृश्यते। यथा— 'देवदत्त, गामानय' इत्युत्तमवृद्धप्रयोगात् सास्नादिमतीं व्यक्तिं मध्यमवृद्धः सञ्चारयति, तच्चेष्टया तस्य वाक्यस्य तदर्थबोधकतामनुमायानन्तरं-गामानय, अश्वं नय'— गवानयनम् अश्वाहरणं च दृष्ट्वा अन्वयव्यतिरेकाभ्यां क्रियापदार्थान्विते कारके कारकपदस्य, कारकपदार्थान्वितक्रियां च क्रियापदस्य शक्तिं बालोऽवधारयति। ततः प्रयोगकाले तस्य प्रथमत एव अन्वितबुद्धिर्जायते (काव्यप्रकाशसूत्रम् ६ झककीकरटीका) । विद्यते चात्र अंशत्रयमावापोद्वापौ, प्रत्यक्षक्रिया, अन्वयव्यतिरेकश्चेति। प्रत्यक्षक्रिया-गवानयनक्रिया, आवापोद्वापौ गामश्वमिति पदयोः आनयेति

क्रियापदयोश्च । एवं गोपदसत्वे सास्नादिमती व्यक्तिः तद्भावे तद्भिन्ना व्यक्तिरिति अन्वयव्यतिरेकयोर्ज्ञानम् । एवं क्रियायाः प्रत्यक्षदर्शनेन, चित्रवस्तुनोः प्रदर्शनेन च अर्थावबोधः सुगमः सुकरश्चेति विज्ञायते ।

II. छात्राणां संस्कृताध्ययनं प्रति समुचितप्रवृत्त्यनुरागोत्पादनार्थं कानिचन तत्त्वानि पाठ्यक्रमनिर्माणावसरे अनुसर्तव्यानि । तानि च—

(अ) पाठ्यक्रमे विषयाः छात्राणां रुचीः अभिरुचीः आवश्यकताश्च मनसि निधाय निर्धारणीयाः ।

(ब) पाठ्यक्रमनिर्धारणं विविधस्तरेषु छात्राणां मानसिकशारीरिकविकासानुरूपं भवेत् ।

(क) वास्तविकसामाजिकजीवनेन सह छात्राणां सम्बन्धः यथा भवेत् तथा विषयाः पाठ्यक्रमे नियोजनीयाः ।

(ड) पाठ्यमानेषु विषयेषु रोचकता, विविधता क्रमबद्धता च अवश्यं भवेयुः ।

(इ) पाठ्यक्रमे पाठनीयाः विषयाः अतिविस्तृतां नैव प्राप्नुयात् । नातिस्वल्पाश्च भवेयुः ।

(फ) छात्राणां नैतिकविकासार्थं केचन भागाः पाठ्क्रमस्य भवेयुः ।

(ग) वसुधैवकुटुम्बकभावः, राष्ट्रभक्तिभावः, अन्ताराष्ट्रियकल्पनादयो भाताः नैरन्तर्येण आमूलाग्रं स्थापनीयाः ।

(ह) क्षत्रपतिशिवरायं प्रति जिजामातुरुपदेशः सुरम्यश्चित्रितः महाकविना श्री. भा. वर्णेकरेण । आह च—

आपत्सु रामः समरेषु भीमः दानेषु कर्णश्च नयेषु कृष्णः ।
भीष्मः प्रतिज्ञापरिपालनेषु विक्रान्तकार्येषु भव-आञ्जनेयः ।

शिवराज्योदये एवम् आदर्श-शृंखला रामश्रीमकर्णकृष्णभीष्माञ्जनेयानां चरितेषु संदृश्यते । एतादृशादर्शभावनापरिपूताः भागाः पाठ्यक्रमे नितरां स्थापनीयाः भवन्ति । येन छात्राणां रुचिः स्थापितेषु पाठेषु वर्धेत । तैः आदर्शगुणैः स्वजीवनं उदात्तं कुर्युः ।

III. संस्कृतस्य विभिननविषयैस्सह सम्बन्धः घनिष्ठः इति विदितचरोऽयं विषयः । संस्कृतपाठनावसरे भूगोलस्य, इतिहासस्य, विज्ञानस्य, गणितस्य, पर्यावरणस्य नैके सन्दर्भाः समायान्ति । एते विषयाः पाठ्यक्रमे योजनामर्हन्ति । पाठ्यक्रमः तादृशः स्यात् येन—

(१) छात्राणां ज्ञानं सुदृढं व्यावहारिकं च भवेत् ।

(२) छात्राः ज्ञानानुभवयोः संबन्धं संस्थाप्य सक्षमाः भवेयुः ।

(३) अनेन समयस्य शक्तेश्च अपव्ययः न भवेत् ।

(४) पाठाः छात्रचित्ताकर्षकाः भवेयुः ।

(५) बालेभ्यः विभिन्नविषयाणां समन्वितज्ञानप्रदानार्थम् अवकाशो लभ्यते ।

(६) अल्पावधावेव अधिकं ज्ञानम् अधिगच्छेयु: छात्रा: ।

(७) बालानां सर्वाङ्गीणविकासार्थं पाठ्यक्रम: सहायको भवेत् ।

(८) पाठ्यक्रमस्य आधिक्यं न्यूनं कर्तुमपि सहसम्बन्धविषय: सहायको भवेत् ।

IV. वर्तमानशिक्षणपद्धतौ शिक्षक: शिक्षार्थी, पाठ्यक्रमश्चेति त्रितयं महत्त्वपूर्णं स्थानं भजत । अत्र पाठ्यक्रमधिकृत्य कान्हिगहॅम महोदयो ब्रूते— "पाठ्यक्रमोऽयं कलाकारस्य (शिक्षकस्य) हस्ते विद्यमानं साधनम् । येन स: स्वसामग्र्यै (शिक्षार्थिने) स्वात्मनश्चित्रालये (विद्यालये) स्वात्मन: आदर्शानुसारं वाञ्छितं रूपं प्रददाति" इति । "(It (curriculum) is a tool in the hands of the artist (teacher) to mould his material (pupil) according to his ideal (objective) in his studio (school)" Cunningham, The pivotal problems of Education, p. २६१; Dr. Karnasinha, Sanskrit Shikshan; p. १०३) शिक्षकोऽपि शिष्यो भूत्वैव सम्यक् सम्प्रेषणं कुर्यात् । यत: लब्धे पदे द्वयं कर्तव्यत्वेन आपतति अध्ययनम् अध्यापनं चेति । उपनिषदपि प्रमाणयत्यत्र — स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् (शिक्षावल्ली, वै. ३) इति । सर्वदा शिक्षकेनैतन्मनसि स्थापनीयं यत् student is not a passive listener but an active participant in learning. आदौ समस्या, तदुपरि प्रश्ना:, समाधानम्, प्रश्ना:, उत्तरम् एवं रूपेण पाठ: प्रदेय: । येन छात्रा: तन्द्रालव: न स्यु: । सङ्क्रान्तिरपि सम्यक् भवेत् । 'यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव' (मालविकाग्निमित्रम्) इति कालिदासोक्तिरपि सार्थकतां प्राप्नुयादिति ।

V. पाठ्यक्रमविषये माध्यमिकशिक्षायोगस्य अभिप्रायोऽपि महत्त्वपूर्णो विद्यते । आयोगो वदति यत् 'विद्यालयस्य सम्पूर्णं जीवनं पाठ्यक्रम एव । स सर्वदृष्ट्या बालकानां जीवने प्रभावपूर्णं पात्रं वहति तथा च छात्राणां संतुलितव्यक्तित्वविकासार्थं सहायको भवतीति'(The whole life of the school is the curriculum, which can touch the life of the student at all points and help them in the evolution of balanced personality. Report of Secondary Education Commission, p.६५) तस्मात् केवलं निर्धारितविषय एव मास्तु । अनिर्धारितविषयेषु पाठ्येतरविषयेष्वपि लक्ष्यं प्रभवेत् । उक्तं च शङ्करभगवत्पादैरपि 'बालस्तावत् क्रीडासक्त:' इति । 'क्रीडाद्वारा शिक्षणमिति' आधुनिकसिद्धान्तममुं मनसि निधाय भाषाक्रीडाणां कृते अवकाश: कल्पनीय: । अपि च, बाला: सर्वदा क्रियाशीला: भवन्ति । अत: क्रियाशक्ते: विकासार्थम् अवसर: प्रदेय: । यतो हि 'कृतिद्वारा शिक्षणमिति आधुनिक: सिद्धान्त: ।'

पुनश्च, पाठ्यक्रमोऽयं जीवनोपयोगी स्यात् । यदि च शिक्षणं मूल्याधिष्ठितं भवेदित्याशास्महे तर्हि जीवनोपयोगिविषयै: सम्भरित: पाठ्यक्रम: भवेत् । किञ्च, छात्राणां स्वभावो भिन्न: । समाजस्य विविधस्तरेभ्य: छात्रा: समायान्ति । कदाचित् तेषां मातृभाषा: अतिभिन्ना: भवेयु: । एवं वैविध्ये अपि एकतासम्पादनार्थं प्रयत्नो विधेय: पाठ्यक्रमे । तदर्थम् यावद्भारतवर्षं एकविध: पाठ्यक्रम: भवेत् ।

पुनश्च, अवकाशस्य सदुपयोगार्थं बाला: शिक्षणीया: । अवकाशसमयेषु, विविधा: स्पर्धा:— वक्तृत्व-स्पर्धा, निबन्धस्पर्धा, गीतगायनस्पर्धा, सुभाषितानां कण्ठपाठस्पर्धा, शुद्धलेखनस्पर्धा, नाट्यस्पर्धा— समायोजनीया: । माध्यमिकशिक्षा-आयोगो ब्रूते— The curriculum should be designed to train the students not only for work but also for leisure. (पृ. ७९)

'स्तरानुगुणं पाठ:' भवेदिति सिद्धान्त:, दिक्षु दिक्षु, पदे पदे शोश्रूयते अद्यत्वे । तत्र कीदृशोऽयं स्तर: इति चेदुच्यते ।

तत्र प्रथम: स्तर: — प्रथमकक्ष्यात: चतुर्थीपर्यन्तम् ।

द्वितीय: स्तर: — पञ्चमीकक्ष्यात: सप्तमीपर्यन्तम् ।

तृतीय: स्तर:— अष्टमीकक्ष्यात: दशमीपर्यन्तम् ।

महाराष्ट्रप्रशासनेन प्रथमकक्ष्यात एव आङ्गलभाषा पाठ्यक्रमविषयत्वेन स्थापिता, तद्वत् संस्कृतस्यापि स्यात् । वर्णपरिचय:, द्विपदात्मकं, त्रिपदात्मकं वा वाक्यं, तत्र प्रचलितवर्तमाने भवेत् । लघुस्तोत्राणि मधुराणि गीतानि, सम्भाषणं, संख्या: इत्येते एव विषया: पाठ्यक्रमत्वेन स्यु: । द्वितीयस्तरे सुभाषितानि, गीतामृतवचनानि, नीतिवचनानि, सुबन्ततिङ्न्तज्ञापनं, लिङ्गवचनपुरुषाणां विभक्तीनां च ज्ञानम् आवश्यकम् । पुल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गानां केषाञ्चित् शब्दानां परिचय:, केषांचित् धत्वूनां लङादिषु परिचयश्च अत्रैव स्यात् । स्तरे च तृतीये स्वरसन्धे:, व्यञ्जनसन्धे:, समासस्य, कारकाणां च परिचय: प्रदेय: । सम्भाषणं तु त्रिष्वपि स्तरेषु छात्राणां स्तरं लक्ष्यीकृत्य कुर्यात् । यतो हि सम्भाषणवर्गस्य महत्त्वं ज्ञात्वैव प्रतिविद्यापीठं संस्कृतसम्भाषणकेन्द्राणि स्थापनीयानीति विश्वविद्यालय-अनुदान-आगोगेनापि कथितं विद्यते । ननु प्रथमकक्ष्यात: बालानां कथं शक्तिग्रह: स्यादिति चेत्, तदत्र न्यायकोश: प्रमाणयति यत् "अङ्गुलीप्रसारणादिपूर्वकं निर्देशेन शक्तिग्रहो भवति । यथा— बाल, तवेयं माता, तवायं पिता, अयं ते भ्राता कदलीफलमभ्यवहरतीति निर्देशेन बालस्य मात्रादौ शक्तिग्रह:" इति । मानसतत्त्वानुसारेण मनुजचित्तेषु भाषाधिगमस्य या स्वामाविकी प्रवृत्ति: विद्यते, या च शैशवे निसर्गत एव मातृभाषावगमे बहूपयुक्ता, सा कृतोपयोगा सती प्रौढतत्वेऽपि भाषाधिगमसमये पुनरप्युद्बुध्य प्रभूतोपकारिणी भवति सैव बालानां चिरसंस्कारोत्पादिनी भवति । तस्मात्पाठ्यक्रमे प्रथमकक्ष्यात एव संस्कृतं स्यात् ।

एवम्—

पाठ्यक्रमस्वरूपं तु दिङ्मात्रंचात्रदर्शितम् ।
तद्विद्वांसोऽनुगृहणन्तु शिक्षातत्त्वं मनीषिण: ।

# उत्कलेषु प्रमुखाप्रकाशितधर्मनिबन्धानां परिशीलनम्

—डॉ. जयकृष्ण मिश्रः

उत्कलेषु संस्कृतभाषाः धार्मिक साहित्यस्य च परम्परां बहुप्राचीनकालतः अद्यापि प्रवहति । भारतीय संस्कृतेः धर्मस्य समाजस्य च संरक्षणार्थमुत्कालीयपण्डितानामवदामुल्लेखयोग्यम् । वर्णाश्रमधर्मानुपालनतत्पराः उत्कलीयाः विद्वांसः प्रादेशिक धर्मादीनां प्रतिपादनार्थं च धर्मशास्त्रे सहस्राधिकग्रन्थान् विरचयामासुः । उत्कलेषु प्राप्तेभ्यः प्राचीनताम्रलेखशिलालेखादिभिः ज्ञायते यत् ख्रीष्टीयतृतीयशताब्दीतः सप्तदशशताब्दीमध्ये एवोत्कलस्य संस्कृतसाहित्ये महत्यभिवृद्धिः सञ्जाता । तदैवोत्कलीयसंस्कृतसाहित्यं गौरवमयावस्थायामुपनीतमभवदिति स्पष्ट-मनुमीयते । तस्मात् कालादद्यावध्युत्कलीयग्रामेषु ब्राह्मणशासनेषु लोकलोचनगोचरीभूताः ताडपत्रात्मकग्रन्थाः बहुलतया प्राप्यन्ते । उत्कलेषु रचिताः अमूल्यसंस्कृतग्रन्थाः देशविदेशेष्वपि प्रसिद्धिं भजन्ते । तेषामनुध्यानमपि दुस्साध्यम् ।

प्राचीनकालेऽपि शंखलिखितादयः ऋषयः उत्कलीयधर्मशास्त्रस्य परिचालकत्वेन परिचायकत्वेन प्रब-न्धकत्वेन च समृद्धिपथं परिष्कृतवन्तः । धर्मक्षेत्रेऽस्मिन्नुत्कले धर्मशास्त्रस्याभिवृद्धये च तौ महात्मानौ पञ्चा-मण्डलान्तर्गतबाहुदानीतीरवासिनौ शंखस्मृतिं शंखलिखितधर्मसूत्रं च रचितवन्तौ । तयोः धर्मग्रन्थाः युगधर्मानुसा-रेण द्वापरे युगे महतीं प्रतिष्ठां, लब्धवन्तः ।

तदनन्तरमपि पञ्चमशताब्दीतः दानपत्रादिमाध्यमेन स्वाचरणेनापि लोके धर्मशास्त्रं प्रचलितमासीत् । तदन्तरं लिपेरभिवृद्धिकालतः तेषां ग्रन्थानां संरक्षणमभवत् । परन्तु दशमैकादशशताब्दीतः तेषां ताडपत्रात्मकानां ग्रन्थानां संग्रहो विहितः ।

भारतरत्न डा. पी. वी. काणेमहोदयाः अर्वाचीनधर्मशास्त्रविद्वत्सु सुपरिचिताः सन्ति । तद्विरचितेषु अनेकेषु ग्रन्थेषु धर्मशास्त्रस्येतिहासः प्रमुखं स्तानमधिरोहति । तस्मिन् ग्रन्थे अनेकानां धर्मनिबन्धानां विस्तृतं प्रामाणिकं च विवरणं प्रदाय ते स्वपाण्डित्यस्य पराकाष्ठां प्रदर्शितवन्तः । परन्तु महतः खेदस्य विषयोऽयं यत् उत्कलीयधर्मनि-बन्धकाराणामनुशीलनविषये तैरोदासीन्यं प्रकटितम् । प्रतापरुद्रीयं सरस्वतीविलासग्रन्थं विहाय नान्यः द्वितीयः ग्रन्थः तैरुट्टंकितः । अत एव उत्कलीयधर्मशास्त्र संप्रदायविषये प्रदातुमस्मिन् निबन्धे प्रयासः विधीयते । यद्यपि शताधिकाः निबन्धकाराः सहस्त्रधिकाश्च ग्रन्थाः विद्यन्ते उत्कलीयधर्मशास्त्रवाङ्मये तथापि प्रमुखानां केषाञ्चन धर्मनिबन्धकाराणां परिचय-काल-कृतिप्रभृतीनां विषये दिङ्मात्रमुदाह्रियतेऽत्र ।

## १. शतानन्दाचार्यः

उत्कलीयधर्मनिबन्धकारेषु असौ सर्वप्राचीनः। गणितज्योतिविषयक-पञ्चसिद्धान्त भास्वतीग्रन्थस्य प्रणेतृरूपेण शतानन्दः विश्वविदितः। विश्वविदितः। तस्य भास्वती व्याख्यो ग्रन्थः ४२०० तमे युगाब्दे, १०२१ तमे शकाब्दे अर्थात् १०९९ तमे खीष्टाब्दे प्रणीतोऽभवदिति भास्वतीग्रन्थपुष्पिकायाः ज्ञायते। असौ पुरुषोत्तमपुरीनिवासी तथा सरस्वती-शंकरयोः पुत्रश्च आसीत्। भास्वतीग्रन्थातिरिक्तं सः शतानन्दरत्नमालां तथा शतानन्दसंग्रहनामकं स्मृतिविषयकं ग्रन्थद्वयं विरचितवान्। एतच्च ग्रन्थद्वयमद्यावधि अप्रकाशितमस्ति। भास्वतीग्रन्थस्तु बहुत्र बहुधा अनेकटीकोपेतः प्रकाशितोऽस्ति।

शतानन्दः गंगवंशस्य प्रतिष्ठातुः अनन्तवर्मचोडगंगदेवस्य राजत्वकाले (१०७७-११४७ खीष्टाब्दे) एतद्ग्रन्थद्वयं विरचितवान् इति ऐतिहासिकानां मतानुसारं निश्चीयते। तत्र प्रमाणं यथा—

**खखश्विवेदप्रमिते युगाब्दे दिव्योक्तिभिः श्रीपुरुषोत्तमस्थः।**
**श्रीमान् शतानन्द इतीदमाह सरस्वती शंकरयोस्तनुजः॥**

## २. शम्भुकरवाजपेयी

उत्कलस्य गंगवंशीययज्ञः नरसिंहदेव (द्वितीय)स्य राजत्वावधौ (१२७८-१३०६ खीष्टब्दाभ्यन्तरे) वाजपेयी शम्भुकरमिश्रमहोदराः अविद्यत। सः शुक्लयजुर्वेदीयः काम्वशाखाध्यायी भरद्वाजगोत्रीयः मिश्रोपाह्वब्राह्मणश्च आसीत्। तस्य वंशधराः उत्कले पुरीमण्डलस्य दाण्डमुकुन्दपुरे शासने अद्यापि निवसन्तीति ज्ञायते। उत्कलीयकिम्दन्तीतः ज्ञायते यत् महाराजभानुदेव (प्रथम)स्य (१२६४-१२७८ खी. अ.) मरणात् परं कस्मादपि कारणात् क्रुद्धः राजानरसिंहदेवः (द्वितीयः) वाजपेयिनं शम्भुकरमपमानयितुं कमपि दानाध्यक्षपदव्यां नियोजितवान्। तां च नियुक्तिं शम्भुकरः न स्वीकृतवान्। तेन राजा अत्यन्तं क्रुद्धः सञ्जातः। तस्मात् शम्भुकरः सपुत्रपत्नीक उत्कलं परित्यज्य काशीं गत्वा तत्रैव न्यवसत्। अन्तरं च परवर्तिनः उत्कलनृपतेरनुरोधं स्वीकृत्य त्रिंशद्वर्षान्तरं तत्पुत्रः विद्याकरः उत्कलं प्रत्यागतवान्। एतच्च वृतान्तं विद्याकरवाजपेयिकृत-नित्याचारपद्धति ग्रन्थात् ज्ञायते। (नि. प. पृ.१)

शम्भुकरस्य शताधिकाः कृतयः आसन्निति ऐतिहासिकाः कथयन्ति। परन्तु अद्यावधि तेषु चतुर्दशग्रन्थानां सूचना प्राप्यते। ते ग्रन्थाः यथा—

१. शम्भुकरपद्धतिः। २. श्राद्धपद्धतिः

३. विवाहपद्धतिः। ४. अग्निहोत्रहोमपद्धतिः।

५. अग्निहोत्रहोमप्रायश्चित्तपद्धतिः। ६. श्रौतधानपद्धतिः।

७. दुर्बलकर्मपद्धतिः। ८. सांवत्सरिकश्राद्धपद्धतिः।

९.पार्वणश्राद्धपद्धतिः। १०. स्मार्तरत्नावली।

११. वृषोत्सर्गपद्धतिः। १२. वैश्वानरीयेष्टिपद्धतिः।

१३. दर्शपौर्णमासेष्टिपद्धतिः । १४. निरूढपशुबन्धपद्धतिश्च ।

एतेषु ग्रन्थेषु उत्कलाक्षरेण श्राद्धपद्धतिः विवाहपद्धतिश्चेति ग्रन्थद्वयं प्रकाशितमस्ति । अन्ये च सर्वे ग्रन्थाः इदानी यावत् पाण्डुलिपिरूपेण अप्रकाशिताः वर्तन्ते । तस्य सर्वेषु ग्रन्थेषु शम्भुकरपद्धतिग्रन्थः उत्तमः । अत्र सर्वाणि यज्ञीयविधानानि एकत्र संकलितानि दृश्यन्ते । परवर्तिभिः उत्कलीयस्मृतिनिबन्धकारैः विश्वनाथमिश्र-विद्यामित्र-दिव्यसिंहमहापात्रादिभिः अयं ग्रन्थः बहुशः उद्धृतो दृश्यते ।

### ३. विद्याकरवाजपेयी

प्रख्यातोत्कलीयधर्मनिबन्धकारस्य शम्भुकरवाजपेयिनः सुपुत्र आसीदसौ विद्याकरवाजपेयीमहाभागः । स्वपित्रा साकमसौ काशीं गत्वा तत्र च स्थित्वा विद्याध्ययनं कृतवान् । परमविदुषः पुत्रः विद्याकरः सर्वविद्यापारंगतः सञ्जातः । अस्यानुमानिककालः ऐतिहासिकानां मतानुसारं यथा—

१२६० खीष्टाब्दे- शम्भुकरस्य जन्म ।

१२८५ खीष्टाब्दे- विद्याकरस्य जन्म ।

१२९२ खीष्टाब्दे- पुत्रपत्नीभ्यां सह शम्भुकरस्य काशीं प्रति गमनम् ।

१२९४ खीष्टाब्दात् १३२४ खीष्टाब्दपर्यन्तम्-विद्याकरस्य काश्यां स्थितिः ।

१३३० खीष्टाब्दे- शम्भुकरस्य मृत्युः ।

१३५० खीष्टाब्दे- विद्याकरस्य मृत्युः ।

विद्याकरः शुक्लयजुर्वेदानुयायी काण्वशाखीयः भरद्वाजगोत्रीयः ब्रह्मणश्चासीत् । शम्भुकरवाजपेयिनः पुत्रत्वाद् विद्याकरः स्वयं गौरवममन्यत इति तस्य ग्रन्थात् ज्ञायते । यथा—

यावत् तौ शशिभास्करौ प्रतपतो यावद्धरायां द्विजाः
श्रुत्युक्तं प्रचरन्ति यावदिह च क्षीरप्रदा धेनवः ।
यावत् ते निवसन्ति विप्रवदने वेदास्त्रयः साधव-
स्तावत् शम्भुकरात्मजस्य करणं भूयात् प्रमोदाय वः । (नि. प्र. प्रथमश्लोकः)

अस्य कृतयः भवन्ति । यथा—

१. विद्याकरपद्धतिः । २. नित्याचारपद्धतिः ।

३. मोक्षपरीक्षा । ४. क्रमदीपिका ।

५. दिनकृत्यदीपिका च ।

(विद्याकरस्य क्रमदीपिकाग्रन्थः मिथिलायाः धर्मनिबन्धकारेण चण्डेश्वरठक्कुरेण (१३००-१३७० खी. अ.) कृत्यचिन्तामणौ उद्धृतोऽस्ति ।) वंगीयप्रसिद्धधर्मनिबन्धकारः रघुनन्दनः (१५२०-१५७५ खी. अ.) स्वग्रन्थे

आह्निकतत्त्वे, विश्वेश्वरभट्टश्च (१३६०-१३९० खी. अ.) मदनपारिजातग्रन्थे विद्याकरपद्धति मुद्धरत: । परवर्तिभ: उत्कलीयधर्मनिबन्धकारै: नरसिंहवाजपेयी-विश्वनाथमिश्र-बृहस्पति-दिव्यसिंह-कृष्णमिश्रादिभि: विद्याकरस्य ग्रन्था: ससम्मानमेवोद्धृता: सन्ति । एतेषु ग्रन्थेषु अद्यावधि विद्याकरस्य नित्याचारपद्धतिग्रन्थ: केवलं पण्डितविनोदविहारीभट्टाचार्यमहोदयानां सम्पादने एसियाटिक् सोसाइटि आफ बेंगलद्वारा १९०३ खीष्टाब्दे प्रकाशित: वर्तते । सोऽपि ग्रन्थ: इदानीं दुर्लभ: सञ्जात: ।

४. रामचन्द्रवाजपेयी

प्रसिद्धोत्कलीयधर्मनिबन्धकारस्य विद्याकरवाजपेयिन: शिष्यत्वेन असौ रामचन्द्र: प्रथित: । अस्य पिता सूर्यदाश:, माता च विशालाक्षी आस्ताम् । पितामहस्य च नाम शिवदाश: । असौ वत्ससगोत्रीय:ब्राह्मण: आसीत् । तस्य परिचय: स्वकृतकुण्डलक्ष्मविवृतौ दत्तोऽस्ति यथा—

> **सूनो: श्रीधरमालवस्य शिवदासाख्यादुरुख्यातित:**
> **सम्राडग्निचितस्तु यस्य जनक: श्रीसूर्यदाशोऽजनि ।**
>
> **यन्मातुर्यशसा दिशो दशविशालाक्ष्यावलक्ष्या: सृज-**
> **त्येष स्वाहितकुण्डलक्ष्मविवृतिं रामोऽवतन्नैमिषे ॥**

अस्य काल: १३२५-१४०० खीष्टाब्दाभ्यन्तरे आसीत् ।

**अस्य कृतय:-**

१. कूर्मांगपद्धति: ।

२. कुण्डलक्ष्मविकृति:-रचनाकाल: १४४९ खीष्टाब्द: (ग्रन्थपुष्पिकात: ज्ञायते) ।

३. कुण्डाकृति:- रचनाकाल: १४४९ खीष्टाब्द: (ग्रन्थपिष्पिकात: ज्ञायते) ।

४. गृह्यसूत्रपद्धति: ।

५. नाडीपरीक्षा-रचनाकाल १४४९ खीष्टाब्द: (ग्रन्थपुष्पिकात: ज्ञायते) ।

६. प्रायश्चित्तदीपिका !

७. शारदातिलकटीका-रचनाकाल: १४४९ खीष्टाब्द: (ग्रन्थपुष्पिकात: ज्ञायते) ।

८. शुल्ववार्तिकम्- रचनाकाल: १४३४ खीष्टाब्द: (ग्रन्थपुष्पिकात: ज्ञायते) ।

कात्यायनशुल्वसूत्रस्य वार्तिकानि ५१५ श्लोकै: रचितानि ।

९. शुल्ववार्तिकटीका- कात्यायनशुल्वसूत्रस्य टीकाग्रन्थोऽयम् ।

१०. शुल्वसूत्रवृत्ति:- कात्यायनशुल्वसूत्रस्य पद्यात्मिका टीका ।

११. समरसारः- युद्धविद्यासम्बन्धी अयं ग्रन्थः अद्यावधि संरक्षितो विद्यते पुरीमण्डलस्य वीरप्रतापपुर-शासने।

अन्वेषकाणाम् एस्. एत्. कत्रेमहोदयानां मतानुसारं शुल्ववार्तिक-शुल्वार्तिकटीका-शुल्वसूत्रवृत्तिग्रन्थाः अद्यापि उज्जयिनीस्थ-सिन्धिया ओरियण्टालइन्स्टीच्यूटमध्ये संरक्षिताः सन्ति। एते च सर्वे ग्रन्थाः अप्रकाशिताः तिष्ठन्ति।

**५. गजपतिप्रतापरुद्रदेवः**

उत्कलस्य प्रख्यातगजपतेः पुरुषोत्तमदेवस्य पुत्रः प्रतापरुद्रदेवः (१४९७-१५३५ ख्री. अ.) उत्कलस्य गजपतिनृपतित्वेन अवर्तत। प्रतापरुद्रस्य नाम्ना अनेक ग्रन्थाः प्रणीताः सन्ति। ते च ग्रन्थाः तस्य सभापण्डितैः विरचिताः आसन्निति समालोचकाः कथयन्ति। प्रतापरुद्रस्य नाम्ना त्रयः ग्रन्था उपलभ्यन्ते। यथा-१. सरस्वतीविलासः-उत्कलीयपण्डितः लक्ष्मीधरभट्टमिश्रः ग्रन्थममुं १५२० ख्रीष्टाब्दात् प्राक् कदाचित् लिखित्वा स्वपृष्ठपोषकस्य नृपतेः नाम्ना उत्सर्गीकृतवान् इति ज्ञायते। अयं च ग्रन्थः डाक्टर आर.शर्माशास्त्रीमहोदयेन महीशूरतः १९२७ ख्रीष्टाब्दे प्रकाशितोऽस्ति। परन्तु इदानीमपि अयं ग्रन्थः दुर्लभः सञ्जातः।

२. प्रतापमार्तण्डः- अयं च ग्रन्थः पराशर गोत्रीयेण माधवभट्टस्य पुत्रेण रामकृष्णभट्टेन लिखितः। स च रामकृष्णः ग्रन्थममुं विरचय्य उत्कलगजपतेः राजगुरोः बलभद्रमिश्रसकाशात् "पण्डितशिरोमणि" पदवीं लब्धवान् इति तल्लिखित-तीर्थरत्नाकरग्रन्थात् ज्ञायते अत्र पदार्थनिर्णयः, वत्सरादिनिर्णयः, तिथिनिर्णायः, व्रतनिर्णायः, विष्णु-भक्तिश्चेति पञ्च प्रकाशाः विद्यन्ते।

३. कौतुकचिन्तामणिः-अयं च ग्रन्थ तिसृभिः दीप्तिभिः विभक्तः। तत्र प्रथमे चित्रबन्धः, द्वितीये प्रहेलकादि काव्यरचना, तृतीये इन्द्रजालविद्या चेत्येते विषयाः पर्यालोचिताः।

सरस्वतीविलासं विहाय अन्ये च सर्वे ग्रन्थाः अद्यावधि अप्रकाशिताः वर्त्तन्ते

**६. मन्त्रिवरगोदावरमिश्रः**

उत्कलेतिहासे कौत्सवंशावतंसस्य राजगुरुबलभद्रमिश्रस्य पुत्रः गोदावरमिश्रः अन्यतमः अविस्मरणीय-पुरुषः। स्वपितुः मरणात् परं (१५१० ख्री) असौ उत्कलगजपतेः राजगुरुरभवत्। ब्राह्मण्धर्मस्योत्थानाय प्रसाराय चस्य अवदानमतुलनीयमासीत्। गजपतेः पुरुषोत्तमदेवस्य काञ्चीनारीं प्रति युद्धाभियानात् परं यदा काञ्ची नरेशस्य सैन्यम् उत्कलाक्रमणाय आगताः तदा गोदावरः मन्त्रसिद्धया गोदावरीनद्यामकालजलोपप्लवं कृत्वा गजपति-सकाशात् "गादोवरी वर्द्धन" पदवीं प्राप्तवान्। प्रतापरुद्रनृपति-सकाशादसौ कविपुंगव-पण्डितराजपदवीभ्यां भूषितोऽभवत्। तदनु गजपतेः प्रधानमन्त्रीरूपेण चाभिषिक्तः। गोदावरस्य मातुः नाम अन्नपूर्णा आसीत्। स च दुर्गायाः परमोपासकः। शारदाशरदर्च्चनपद्धतेः मंगलाचरणे पितरौ प्रणमत्यसौ। तद्यथा—

**राजकौत्ससवंशभूषणमणिं नानागुणिग्राममणीं**
**कुज्ञानार्णवतारणैकतरणिं शिष्यौघचिन्तामणिं।**

**सद्विद्याविपणिं सुबोधसरणिं विप्राग्रणीं नौम्यहं**

**तातं श्रीबलभद्रसंज्ञममलं तामन्नपूर्णां प्रभुम् ॥ ३ ॥**

तत्कृतयः- १. तन्त्रचिन्तामणिः २. योगचिन्तामणिः ।

३. अद्वैतदर्पणः । ४. अधिकरणदर्पणः ।

५. नीतिचिन्तामणिः । ६. नीतिकल्पलता ।

७. आचार चिन्तामणिः । ८. जयचिन्तामणिः ।

९. सामुद्रिककामधेनुः । १०. पातञ्जलदीपिका ।

११. शारदाशरदर्च्चनपद्धतिः । १२. हरिहरचतुरंगम् ।

एतेषु ग्रन्थेषु केवलं हरिहरचतुरंगग्रन्थः एस्. के. रामशास्त्रीद्वारा सम्पादितो भूत्वा माड्रास गवर्नमेण्ट ओरियण्टाल मानुस्क्रिप्ट लाइब्रेरीपक्षतः १९५० खीष्टाब्दे प्रकाशितोऽस्ति । अन्ये च सर्वे ग्रन्थाः अप्रकाशिताः वर्तन्ते ।

**७. नरसिंहवाजपेयी**

असौ कौत्सवंशोत्पनस्य धराधरमिश्रस्य पौत्रः, मुरारिमिश्रस्य च पुत्र आसीत् । नरसिंहः स्वज्येष्ठतातेभ्यः विघ्नेश्वरमिश्रेभ्यः विद्याशिक्षां कृतवान् । असौ अष्टादशविद्यासु पारंगतः सन् दिल्लीश्वरं सम्राजमाकवरं स्वविद्यानैपुण्यप्रदर्शनेन सन्तोषयामास । तेन च तस्य पृष्ठपोषकस्य राज्ञः मुकुन्ददेवस्य ख्यातिः वर्द्धिताऽऽसीत् । अस्य कालः १५२५-१५८० खीष्टाब्दाभ्यन्तरे आसीत् । तस्य व्यक्तित्वविषये सः स्वयमेव लिखति । यथा—

**मीमांसकानां धुरिकीर्तनीयो वेदान्तवेदी सुकविः स्मृतिज्ञः ।**
**विद्यासु योऽष्टादशसु प्रदीपं निर्माय योगेन जगाम सिद्धिम् ॥**
**दिल्लीश्वरं यः परितोष्य वाग्भिः विद्याभिरष्टादशभिः प्रवीणः ।**
**मुकुन्ददेवस्य प्रशस्तवाचः समानयत् सर्वजनस्य मध्ये ॥**

(सिंहवाजपेयी वंशावली-श्लो. २८,३०)

तस्य कृतयः-१. अष्टादशप्रदीपसमन्वितः धर्मशास्त्रग्रन्थः । तत्र च प्राप्यमाणाः ग्रन्थाः यता—

क. वर्षप्रदीपः । ख. व्यवस्थाप्रदीपः ।

ग. भक्तिप्रदीपः । घ. प्रायश्चित्तप्रदीपः ।

ङ. श्राद्धप्रदीपः । च. प्रतिष्ठाप्रदीपः ।

छ. शाबरभाष्यप्रदीपः । ज. नित्याचार प्रदीपः ।

झ. समयप्रदीपः । ञ. चयनप्रदीपः ।

२. सिंहवाजपेयवंशावली । ३. दानसागरः ।

४. ग्रहयज्ञपद्धतिः । ५. सामवेदीयव्रतपद्धतिः ।

६. गणेशमानसिकपूजा । ७. शिवरात्रिव्रतविधिश्च ।

एतेषु ग्रन्थेषु चयनप्रदीपः, नित्याचारप्रदीपश्च पुरीस्थित-श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठ-द्वारा प्रकाशितोऽस्ति । नित्याचारप्रदीपस्य प्रथमभागः एसियाटिक सोसाइटि आफ वेंगलद्वारा १९०७ खीष्टाब्दे द्वितीयभागश्च १९२८ खीष्टाब्दे प्रकाशितौ आस्ताम् । अस्य ग्रन्थाः धर्मशास्त्रक्षेत्रे हेमाद्रिमाधवाचार्य-चण्डेश्वर-रघुनन्दनानां ग्रन्थैः साकं समकथाः वर्तन्ते । परन्तु एते सर्वे ग्रन्थाः इदानीं यावदप्रकाशिताः वर्तन्ते ।

**८. गदाधरराजगुरुः**

असौ कौशिकगोत्रियस्य बृहत्पण्डितश्रीकृष्णमहापात्रस्य पौत्रः, नीलाम्बरस्य पुत्रश्च आसीत् । अस्य मातुः नाम जानकी । गदाधरः उत्कलगजपतेः हरेकृष्णदेवस्य वंशपरंपरया राजगुरासीत् । अस्य कालः १६८० तः १७५० खीष्टाब्दभ्यन्तरे । गदाधरस्य पितामहः श्रीकृष्णः नीतिरत्नाकरग्रन्थं प्रणीतवान् । तत्पिता नीलाम्बरश्च वेदान्त-स्मृति-ज्योतिष-साहित्य-व्याकरण-नीतिशास्त्रेषु प्रवीणः विद्वान् आसीत् । सोऽपि राजगुरुपदव्यामवर्तत । तस्य वंशपरिचयः कालसारे सः उद्धरति यथा—

**कृष्णात् कौशिकवाजपेयतुलसीवंश्यात् बृहत्पण्डितात्**
**नीतिग्रन्थकृतः स राज्यगुरुरित्यासीद् वदान्याग्रणीः ।**
**पुत्रः शारदवाजपेयमखकृद् विद्वान् हरेकृष्णभू-**
**र्नाथ श्रीमहिषीगुरुर्हलधराभिख्योऽग्रजो ग्रामकृत् ।। (म. श्लो. ३.)**

**यज्वा यच्चरमो यमेश्वर इति भ्राता बृहत्पण्डितः**
**तं नीलाम्बरनामकं च पितरं श्रीजानकीमातरम् ।**
**नत्वा राजगुरुर्गदाधरसुधीस्तं कालसाराभिधं**
**ग्रन्थं प्रारभते विलोक्य यमिमं निःसंशयाः स्युर्जनाः ।। (म. श्लो. ७.)**

राजगुरुगदाधरमहापात्रः धर्मशास्त्रस्याष्टादशतत्त्वानि गृहीत्वा ग्रन्थान् प्रणीतवान् । अयं च ग्रन्थः उत्कलीयसमाजे गदाधरपद्धतिनाम्ना ख्यातः । ते च अष्टादशसारसंज्ञकाः ग्रन्थाः इदानीं पूर्णतया न प्राप्यन्ते । तेषु सुलभानां केषाञ्चन नामानि उपस्थाप्यन्ते ।

१. कालसारः—अयं ग्रन्थः उत्कलाक्षरैः उत्कलप्रान्ते बहुधारं प्रकाशितोऽस्ति । इदानीमपि सुलभोऽयं ग्रन्थः । देवनागराक्षरेण महामहोपाध्यायसदाशिवमिश्रसम्पादितः एसियाटिक् सोसाइटि आफ् वेंगलद्वारा १९०४ खीष्टाब्दे च एकवारं प्रकाशित आसीत् । परन्तु इदानीं न प्राप्यतेऽयं ग्रन्थः ।

२. आचारसारः—अयं च ग्रन्थः महामहोपाध्यायसदाशिवमिश्रसम्पादितः एसियाटिक् सोसाइटि आफ् वेंगलद्वारा १९०८ खीष्टाब्दे वारमेकं प्रकाशितः आसीत्। परन्तु इदानीं न प्राप्यते। उत्कलाक्षरेण तु नाद्यावधि प्रकाशितोऽयं ग्रन्थः।

३. शुद्धिसारः—अयं च ग्रन्थः सांप्रतमेव मया सम्पाद्य प्रकाशितः। अत्र च त्रिभिः काण्डैः कालशुद्धिः, द्रव्यशुद्धिः, शारीरशुद्धिश्च प्रतिपादिताः सन्ति।

४. दानसारः। ५. व्रतसारः।

६. स्नानसारः। ७. विवाहसारः।

८. संस्कारसारः। ९. योगसारः।

१०. दीक्षसारः।

प्रथमग्रन्थत्रयं विहाय अन्ये च सर्वे ग्रन्थाः इदानीं यावदप्रकाशिताः वर्त्तन्ते।

उत्कलीयधर्मशास्त्रकाराः द्वादशप्रमुखविषयानुपजीव्य ग्रन्थान् प्रणीतवन्तः। ते च विषयाः भवन्ति आचार-आह्निक-दान-प्रतिष्ठा-प्रायश्चित्त-भक्ति-यज्ञ-शुद्धि-श्राद्ध-संस्काराः। एते च ग्रन्थाः प्रायः खीष्टात् परमेकादशशतकात् ऊनविंशशतकाभ्यन्तरे एव प्रणीताः आसन्।

अद्यावधि प्रकाशिताः उत्कलीयधर्मशस्त्रग्रन्थाः

एसियाटिक् सोसाइटि आफ् वेंगल, कलिकाता द्वारा—

१. विद्याकरवाजपेयिनः-नित्याचारपद्धतिः

२. नरसिंहवाजपेयिनः-नित्याचारप्रदीपः

३. गदाधरराजगुरोः-आचारसारः, कालसारश्च,

४. दिव्यसिंहमहापात्रस्य-श्राद्धदीपः,

५. वासुदेवस्य-स्मृति प्रकाशस्य प्रथमभागः,

६. महामहोपाध्यायसदाशिवमिश्रस्य-कल्पद्धर्मसर्वस्वमित्येते ग्रन्थाः प्रकाशिताः सन्ति।

एतदतिरिक्तं स्वाधीनताप्राप्त्यन्तरमुत्कलप्रदेशे अपि विद्वद्धुरीणानां धर्मशास्त्रविदां प्रचेष्टया कियन्तः एव निबन्धग्रन्थाः प्रकाशिताः सन्ति। येषां नामानि अत्र उपस्थाप्यन्ते।

**१. पण्डितकुलमणिमिश्रमहोदयानां प्रयत्नेन—**

क. नरसिंहवाजपेयिकृत-नित्याचारप्रदीपस्य प्रथमभागः श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठद्वारा प्रकाशितः।



ख. दिव्यसिंहमहापात्रस्य कालदीपः तेनैव तेजनीटाकया साकं सम्पाद्य प्रकाशितः।

**२. डा. व्रजकिशोरस्वाईमहोदयेन-विप्रमिश्रकृतः श्राद्धप्रदीपः,**

श्रीभुवनेश्वरवडपण्डाकृतः वार्षिकपर्वसंग्रहश्च इत्येतौ प्रकाशितौ आस्ताम् ।

**३. डा. विश्वनाथस्वाईमहोदयेन-महामहोपाध्यायकृष्णमिश्रकृतं कालसर्वस्यम्,**

महामहोपाध्यायकृष्णमिश्रकृतं शुद्धिसर्वस्वम्,

महामहोपाध्यायकालिदासचयनिकृता शुद्धिचन्द्रिका (विद्यावागीशटीकोपेता),

इत्येते त्रयः ग्रन्थाः सम्पादिताः प्रकाशिताश्च ।

**४. डा. जयकृष्णमिश्रमहोदयेन-बृहस्पतिविरचिंता कृत्यकौमुदी,**

गदाधरराजगुरुविरचिताः शुद्धिसारः इत्येतौ द्वौ ग्रन्थौ सम्पाद्य प्रकाशितावास्ताम् ।

**५. प्रो. किशोरचन्द्रमहापात्रमहोदयेन नरसिंहमिश्रवाजपेयिनः चयनप्रदीपग्रन्थः सम्पाद्य प्रकाशितः ।**

**६. डा. खगेश्वरमिश्रमहोदयेन धर्मपाठीकृता कालचन्द्रिका प्रकाशिता ।**

एतदितरिक्तानान्येषां शताधिकानां ग्रन्थानां प्रकाशनमपि अपेक्षते । अन्यथा कालप्रवाहात् तेषां ग्रन्थानां नाशः कदाचिद् भवेत् । पाण्डुलिपिरूपेण सुरक्षितानामेतेषामप्रकाशितधर्मशास्त्रग्रन्थानां प्रकाशनेन धर्मशास्त्रवाङ्मयस्य संस्कृतसाहित्यस्य चाभिवृद्धिः नितरां साधिता स्यात् । उत्कलीयधर्मशास्त्रसम्प्रदायोऽपि एकं महत्त्वपूर्णं स्थानं स्वीकरिष्यतीति नास्ति संशयलेशः । तदर्थमार्थिकानुदानप्रदानेन राष्ट्रियसंस्कृतसंस्थानस्य कर्तृपक्षाः, भारत-सर्वकारस्य संपृक्ता अधिकारिणश्च सहायतां करिष्यन्ति चेत्तर्हि अचिरमेवैते ग्रन्थाः लोकलोचनमेष्यन्ति इत्याशासे इति शम् ।

# अन्यभाषाणां शिक्षणे संस्कृतभाषायाः योगदानम्

प्रो. श्रीधरवसिष्ठ

संस्कृतं भारतीयपरंपरानुसारेण अनादिनिधना भाषा अस्ति यथा हि उक्तम्—

**'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।**
**आदौ वेदमयी दिव्या ततः सर्वाः प्रवृतयः ।।'** इति ।

एवमेव दण्डिना अपि अस्या भाषाया दैवीत्वं सुग्रन्थे काव्यादर्शे उद्घोषितम् अस्ति । यत्—

**'सस्कृतं नाम दैवी वाग् अन्वाख्याता महर्षिभिः ।'**

सायणेन तु सृष्टेः प्राग् एव संस्कृतस्य अस्तित्वं सूचितम्—

**'यस्य निश्वसितं वेदाः वेदेभ्यो योऽखिलं जगत् ।**
**निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ।।'** इति ।

सर्वे जानन्ति यत् सम्पूर्णस्य विश्वस्य प्रथमः ग्रन्थः ऋग्वेद एव । ऋग्वेदः च संस्कृते लिखितः । यदा महेश्वरः वेदेभ्यः जगत् निर्ममे तदा संस्कृतं पूर्वं प्रावर्तत एव यतो हि वयम् एकसृष्टिमानिनः एव न स्मः अस्माकम् भवे तु सृष्टीनां परम्परा अस्ति । अतएव अनादिनिधनाप्रयोगः संस्कृतस्य विषये बोधगम्यतराः भवति ।

अन्यमतावलम्बिनां विदुषां मते संस्कृतभारोपीयभाषापरिवारस्य सर्वप्रथमा, सर्वप्रथमभाषासु अन्यतमा अस्ति । भारतस्य भाषाणां जननी धात्रीरूपेण संस्कृतभाषा एव । भारते १९५६ वर्षे स्थापितस्य संस्कृतायोगस्य अध्यक्षाः डॉ. सुनितिकुमारचटर्जिमहोदयाः भाषाविज्ञानिनां मूर्धन्याः आसन् । तैः संस्कृतायोगविवरणे एतद् उपन्यस्तम् उत्तरभारतस्य सर्वासां भाषाणां जननी संस्कृतभाषा एव; दक्षिणभारतस्य द्रविडपरिवारभाषाणां धात्रीरूपेण संस्कृतं वरीवर्ति । तासां शब्दकोषे वाक्यविन्यासे च संस्कृतस्य प्रभावः परिलक्षिताः भवति ।

संस्कृतस्य अस्य विशिष्टस्योपयोगः भाषाणां शिक्षणे अवश्यमेव लाभार्थं करणीयः । अयं उपयोगः द्विप्रकारकः भवितुं शक्नोति—

१. संस्कृतशिक्षणवेलायाम् ।

२. अन्यभाषाशिक्षणवेलायाम् ।

संस्कृतशिक्षणकाले अस्माभिः छात्राणां मातृभाषायां अन्यासु छात्रज्ञातभाषासु च विद्यमानानां संस्कृत-शब्दानां साहाय्यं ग्रहीतव्यम्। यथा हिन्दिभाषायां 'हस्त' 'हाथ' इमौ द्वो शब्दौ करशब्दार्थं प्रयुज्येते। अतः हस्त-शब्दस्य शिक्षणकाले शिक्षकेण छात्रः एतद् सूचयितव्य यत् शब्दः संस्कृतशब्दः अयं शब्दः हिन्दिभाषायाम् अपि तत्समानरूपेण प्रयुज्यते। अतः एतादृशाः शब्दाः तत्सम शब्दा इति नाम्ना ज्ञायन्ते। येषां शब्दानां मातृभाषायां संस्कृते च एवमेव रूपं भवति। ते शब्दाः तत्समशब्दाः इत्युच्यन्ते। अध्यापकेन सर्वेषां तत्समशब्दानां शिक्षणवेला-याम्, छात्राणां मातृभाषायां छात्रज्ञातभाषासु च विद्यमानानां तेषां शब्दानां सूचना दातव्या संकेतः वा कर्तव्यः। संस्कृतभाषायाः पाठ्यपुस्तकानां निर्माणे अपि अयं सिद्धान्तः अनुपालनीयः यत् अधिकाधिकानां मातृभाषायाम् उपलब्धानाम् तत्समशब्दानां पुस्तकेषु उपयोग कृतः स्यात्। पाठ्यपुस्तकेषु बालानां जीवनेन तत्क्षेत्रीयसमाजस्य जीवनेन च सम्बद्धाः पाठाः संकलिताः स्युः। एतेन छात्राणां मातृभाषायां विद्यमानानां अत एव पूर्वपरिचितानां शब्दानां प्रयोगसारल्येन अधिकतया कर्तुम् शक्यते। करस्य कृते द्वितीयः शब्दः हिन्दी भाषायां हाथ इति भवति। अयं शब्दः संस्कृतस्य हस्त इति शब्दात् विकसितः। शिक्षकेण एतद् प्रबोधनीयं यत् हस्त शब्द एव मातृभाषायां 'हाथ' इति सञ्जातः यतो हि 'हाथ' शब्दः हस्त शब्दात् उद्भूतः अत् एतादृशाः शब्दाः तद्भवशब्दाः इति उच्यन्ते। येषाम् संस्कृतशब्दानां तद्भवरूपाणि अपि मातृभाषायां प्रचलितानि भवन्ति तेषाम् संकेतः शिक्षकेण अध्या-पनकाले अवश्यमेव कर्तव्यः। इत्थं छात्राः संस्कृतस्य मातृभाषायाश्च परंस्परं सम्बन्धं सुविज्ञाय संस्कृतस्य अध्ययने अधिकतरां रुचिं प्रदर्शयिष्यन्ति, संस्कृतबोधने च सारल्यं च अनुभविष्यन्ति।

**२. अन्यभाषाशिक्षणवेलायाम्—**

अस्मिन् पत्रे अस्माकं मुख्यः विषयः 'अन्यासां भाषाणां शिक्षणे संस्कृतस्य योगदानम्' इत्यस्ति। अतः अत्र प्रबो[illegible]ः अन्यभाषाशिक्षकाः सन्ति। न तु प्रत्यक्षतया संस्कृतस्य शिक्षकाः। परं एतदपि अवधेयं यत् अति प्राचीनकालाद् एव संस्कृतस्य ज्ञाता मातृभाषांयाः योग्यतमः शिक्षकः मन्यते स्म। अस्माभिः ज्ञायते यत् संस्कृतशिक्षकाः हिन्दिभाषाम् अन्याश्च मातृभाषाः पाठयितुम् नियोज्यन्ते स्म। ते सफलतया स्वशिक्षणं समपादयन्। अद्यत्वेपि केषुचन प्रदेशेषु संस्कृतस्य शिक्षकाः संस्कृतविषयस्य पाठ्यक्रमे विद्या अन्यकारणादुतका त्रणान्तरा वा शिक्षणे नियोज्यन्ते। अतः तान् प्रति अयं उपक्रमः मन्तव्यः।

अन्यासु भाषासु संस्कृतस्य शब्दाः तत्समरूपेण च तद्भवरूपेण च बाहुल्येन उपलभ्यन्ते। सामान्यतया तत्समशब्दानां प्रयोगः वक्तुः अभिजात्यं शिष्टत्वं च व्यंजयति। सामान्यता मलयाल भाषायां ९५ प्रतिशतं तेलगुकन्नडभाषयोरशीतिप्रतिशतं मराठी गुजराती भाषयोः सप्तति प्रतिशतं, बांग्ला, ओड़िडयाभाषयोः षष्टि प्रतिशतंहिन्दी, पंजाबी सदृशीषु भाषासु चत्वारिंशत् प्रतिशतंशब्दाः संस्कृतस्य एव सन्ति। कदाचित् जनप्रयोगे एतत्प्रतिशतं न्यूनताम् गच्छति, परं साहित्यभाषाप्रयोगे वैज्ञानिकभाषाप्रयोगे च संस्कृतशब्दानां आधिक्यं वर्तते। भारतसंविधानस्य ३४५ धारानुसारेण इयं व्यवस्था कल्पिता अस्ति यत् यत्र राजभाषारूपेण हिन्दिभाषायां नूतनशब्दानां अपेक्षा वर्तते तत्र शब्दाः संस्कृतभाषाया आधारेण ग्रहीतव्या निर्मातव्या वा। अन्यभाषा शिक्षकेण मातृभाषाम् अन्यभाषां वा अध्यापयता एतद् अवधेयं यत् तेन पाठ्यपुस्तकेषु आगतानां तत्समशब्दानां

तद्भवशब्दानां च परिचय: शिक्षणमध्ये दातव्य: । मानवे इयं सुलभा प्रवृत्ति: यद् असौ शब्दस्य तत्त्वं ज्ञातुं इच्छति । इमां प्रवृतिं लक्ष्यीकृत्य एव यास्केन निर्वचनानि कृतानि गौ: कस्मात् गच्छति इति गौ: पुरुष: कस्मात् पुरि शेते इति पुरुष: इत्यादि इयम् व्युत्पत्तिजिज्ञासा जनस्य सामान्या अभिलाषा भवति । अध्यापकेन इयं जिज्ञासाप्रवृति: छात्रेषु: प्रवर्धनीया । इयं प्रवृत्ति: अवश्यमेव छात्रान् संस्कृतस्य निकटे आनयति । शब्दप्रयोगस्य वास्तविकं प्रयोजनम् अपि छात्रेण ज्ञातुम् शक्यते । इत्थं छात्राणां भाषायां महान् अधिकार: स्यात् ।

तमिलभाषाया: सम्बन्धे एतद् उच्यते यत् तस्याम् सस्कृतशब्दानां न्यूनता अस्ति । परं ततोऽपि चिन्ताया विषय: अयं यत् राजनैतिककारणात् तमिलभाषाया: विद्यमानान् संस्कृतशब्दान् विकृत्य तत्र नूतना: संस्कृत भिन्नशब्दा: स्थाप्यन्ते । एतादृशी प्रवृत्ति: कैश्चन जनै: हिन्दिसदृशीषु अन्यासु भाषासु अपि अनुस्रियते । एतेन भारतस्य आधुनिक्या: भाषा: संस्कृतात् दूरीभविष्यन्ति मूलछिन्ना: च स्यास्यन्ति । मूले छिन्ने पादपस्य या स्थिति: भवति तादृशी स्थिति: आधुनिकभाषाणाम् अपि न स्यात् एतदर्थं विज्ञै: दूरदर्शिभि: जनै: सावधानतया अस्या: प्रवृते: प्रत्याख्यानं कृत्वा छात्राणां पाठ्यपुस्तकेषु अन्येषु च साहित्यग्रन्थेषु संस्कृतनिष्ठभाषाया प्रयोग: कर्तव्य: । एवं सर्वथा सिद्धम् एव यत् संस्कृतं सर्वस्य देशस्य योजिका भाषा अस्ति । संस्कृतनिष्ठा मराठीभाषांहिन्दी भाषा भाषयता जनेन सरलतया अवबोद्धुं शक्यते। एवमेव यदि भातरीयभाषाणां संस्कृतनिष्ठतायां सत्यां देवनागरी लिप्यां लेखनं कृतं स्यात् तदा भिन्नभिन्नभाषाभाषिभि: तासाम् अवबोध: सरलतया कर्तुं शक्यते ।

अस्माभि: दृश्यते यत् तेलुगुकन्नडामराठीबांगलासदृशीषु भाषासु साहित्यं अपि-संस्कृतसाहित्यानुकारिसम्पादि च वर्तते । उदाहरणार्थं हिन्दीभाषायां रामचरितमानसमहाकाव्यं, तेलुगुभाषायां तन्नयतिक्कनएर्रनकवित्रयकृतं श्रीमदान्ध्रभारतं, पोतन्नकृतं श्रीमद्भागवतं, पिन्नलमर्रिपिनवीरमहुडुकविकृतम् अभिज्ञान शाकुन्तलम् , पञ्जाबी, भाषायां सुन्दररामायणं बांगलाभाषायां चित्रागेदसम्वाद: इत्यादया: ग्रन्था: अवधेया: । एतादृशं साहित्यं पाठयता शिक्षकेण संस्कृतस्य मूलग्रन्था अपि ससंदर्भं छात्रेभ्य वक्तव्या: एव । इत्थं कृते भारतस्य सामाजिकी, राजनैतिकी, सांस्कृतिकी च एकता दृढतया भविष्यन्ति । शिक्षाया: एतदपि महत्वपूर्णं लक्ष्म अस्माभि: एतेन उपक्रमेण पूरयितुं शक्यते ।

# व्याकरणशिक्षणे कथाकथनविधिः

डॉ. शिवकुमारः शर्मा

संस्कृतशिक्षणक्षेत्रे नूतन विधयः प्रयुज्यन्ते । तत्र प्रतिशास्त्रं तत्तत्स्वरूपमाश्रित्य अध्यापनविधिरपि भिद्यते । प्रकृते निबन्धे व्याकरणशिक्षणे उपयोगिनो विधयो विचार्यन्ते । कस्यापि नूतनविषयस्य शिक्षणात्पूर्वमधिगमाद्वा पूर्वं तस्य सामान्यं ज्ञानं दृढीभूतं यावन्न भवति तावत् किमपि हृद्गतं न भवति एषः सामान्यो नियमः । अत एव व्याकरणशिक्षणात्पूर्वं चतुर्दशसूत्राणां ज्ञानं सम्यग्भवेदेव । अत्र वर्णशिक्षणं द्विधा भवति— प्रथमतश्चतुर्दश सूत्राणि — (१) अइउण्, (२) ऋऌक्, (३) ए ओङ्, (४) ऐ औच्, (५) हयवरट्, (६) लण्, (७) ञमङणनम्, (८) झभञ्, (९) घढधष्, (१०) जबगडदश्, (११) खफछठथचटतव्, (१२) कपय्, (१३) शषसर्, (१४) हल् ॥

द्वितीयो वर्गक्रमः—

| | | | | | |
|---|---|---|---|---|---|
| क | ख | ग | घ | ङ | = कवर्गः |
| च | छ | ज | झ | ञ | = चवर्गः |
| ट | ठ | ड | ढ | ण | = टवर्गः |
| त | थ | द | ध | न | = तवर्गः |
| प | फ | ब | भ | म | = पवर्गः |
| १ | २ | ३ | ४ | ५ | |

अत्र वामतो दक्षिणं प्रति कवर्गादयो भवन्ति । उपरितो अधः प्रति वर्गाणां प्रथमाः, द्वितीयाः, तृतीयाः, चतुर्थाः, पञ्चमाश्च वर्णाः भवन्ति ।

महाभाष्यकारेणोक्तं यत् — "नान्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" अतः अन्तिमौ द्वौ वर्णौ सहैव, अन्ये च वर्णाः पृथक्कृत्य चतुर्दशसूत्राणि पठितव्यानि । यथा — अइउण् । ऋऌक् । एओङ् । इत्यादयः ।

इदानी वर्णानां वर्गक्रमः चतुर्दशसूत्रैः सह योजनीयः यथा— वर्गाणां पञ्चमाः वर्णाः "ङ ञ ण न म" सप्तमेन सूत्रेण सह साम्यं धरन्ति यथा — "ञमङणनम्" (मा. सू. ७) । एवमेव अष्टमनवमयोः सूत्रयोः "झभञ् । (८) घढधष् (९)" (मा. सू. ८-९) अनयोः वर्गाणां चतुर्थैः वर्णैः "घ झ ढ ध भ" एभिः सह साम्यमस्ति । एवमग्रेऽपि समग्रं चिन्त्यम् ।

अनन्तरं स्वराणामष्टादशभेदविषये सामाजिकजीवनमधिकृत्य जिज्ञासुभिः कथामाध्यमेनावबोधनीयं, बोध्याश्च बालाः । तद्यथा — गृहे मुख्यास्त्रयः पुरुषाः सन्ति । तेषां नामानि सन्ति, हस्वः, दीर्घः, प्लुतश्च । एषां त्रयाणामपि प्रत्येकं त्रयस्त्रयः पुत्राः सन्ति तेषांनामानि सन्ति— उदात्तः, अनुदात्तः स्वरितश्च । पितुः नाम सर्वैः सह योजितः भवति । एवं कृते सति हस्वः त्रिविधः— ह्रस्व उदात्तः, ह्रस्व अनुदात्तः, ह्रस्वस्स्वरितः । एवमेव दीर्घोऽपि त्रिविधः, प्लुतश्चाऽपि त्रिविधः सञ्जातः । संकलनया नवभेदाः सञ्जाताः । तदनन्तरं पुत्राणापि द्वौ द्वौ पुत्रौ जातौ तयोः नाम अनुनासिकः, अननुनासिकश्च । हस्वादयः पितामहाः, उदात्तादयः पितरः । आभ्यां अनुनासिक अननुनासि-काभ्यां सह पितृणां पितामहानाञ्च नाम अवश्यमेव स्यात् । तदेवम्—

पितामहाः — ह्रस्वः, दीर्घः, प्लुतः ।

पितरः — उदात्तः, अनुदात्तः, स्वरितः ।

पुत्रौ — अनुनासिकः, अननुनासिकश्च ।

अतः लेखनप्रकारश्चेत्थम्—

| पितामहः | पिता | पुत्रौ |
|---|---|---|
| ह्रस्वः | उदात्तः | अनुनासिकः |
| ह्रस्वः | उदात्तः | अननुनासिकः |
| ह्रस्वः | अनुदात्तः | अनुनासिकः |
| ह्रस्वः | अनुदात्तः | अननुनासिकः |
| ह्रस्वः | स्वरितः | अनुनासिकः |
| ह्रस्वः | स्वरितः | अननुनासिकः |

एवं षड् भेदाः सञ्जाताः । समेषामष्टादश भेदाः भविष्यन्ति । एवं येषां वर्णानां ह्रस्वत्वं नास्ति तेषु ह्रस्वस्य षड् भेदानामपि अभाव एव भविष्यति यथा — एचः । एवमग्रेऽपि चिन्त्यम् ।

सन्धिप्रशिक्षणं यथा — "सुधी + उपास्यः" इमे पदे संहितायां विषये तिष्ठतः । अतः लक्ष्यानुरोधेन प्रथमत्वेन "इको यणचि" इति त्रिपदात्मकं सूत्रमागच्छति कथयति च— "इकः स्थाने यण् विधानं करिष्यामि परं तस्यैव इकः स्थाने यस्य समीपे अच् अस्ति" । इदमत्र ध्येयं यत्त्रिविधमधिकरणं भवति— (१) अभिव्यापकाधि-करणं यथा— तिलेषु तैलम् । (२) वैषयिकाधिकरणं यथा — मोक्षे इच्छास्ति । (३) औपश्लेषिकाधिकरणं यथा — वटे गावः । तद्वदत्र औपश्लेषिकाधिकरणमेवात्र "अचि" पदे अस्ति । अतः यस्य इकः समीपे अच् अस्ति तस्यैव स्थाने यण् भविष्यति । अतोऽप्यधिकतरं स्पष्टं कर्तुमत्र ध्वनिच्छेदः करणीयः — "स् उ ध् ई + उ प् आ स् य् अः"

अत्र रेखाङ्किताः त्रयः "इक्" वर्णाः लब्धाः । "इको यणचि" सूत्रमिदञ्चिन्तयति यदत्र दीर्घ "ई" कारः इक् अस्ति अनन्तरम् 'उ' कारः अच् समीपे अस्ति अतः इकारस्य स्थाने यण् करोमि । अत्र यण् आदेशरूपेण भविष्यति । आदेशश्च शत्रुवद् भवति । शत्रुणा देवा मानवा वा सर्वे बिभ्यति का कथा वराकस्य ईकारस्य । अतः ईकारः प्राणरक्षणार्थं मार्गं चिन्तयति—

**तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।**
**आगतं तु भयं वीक्ष्य नरः कुर्याद्यथोचितम् ।।**

कथयति च "इको यणचि" सूत्रं प्रति यन्मदुत्तरवर्ति 'उ' कारः इक् अस्ति तत्र यण् विधीयताम् । अहमच्त्वेन समीपेऽस्मि परमिदङ्किं रामलक्ष्मणयोर्मध्येत शूर्पणखया इव "इको यणचि" इत्यस्य स्थितिः जाता । यतो हि उकारेणाप्येवमेवोक्तं यदहमच्त्वेन समीपेऽस्मि ईकारस्यैव स्थाने यण् विधीयतामिति । परं कर्मयोगी इवान्यायेन घर्षित इव वा "यण्" कार्यं कर्तुं निश्चयङ्करोति, न्यायं च प्राप्तुमग्रगामी भवति तत्र साध्नोतिपरकार्यमिति साधुः तदिव आहोस्वित् न्यायाधीशमिव मिलति "तस्मिन्निति निर्दिष्टे पूर्वस्य" "अव्यवस्थायां व्यवस्थासम्पादिका परिभाषा भवति" अथवा "अनियमे नियमकारिणी परिभाषा भवति" । अत इदमवलोक्य" कथयति यत्— "सप्तम्यन्तपदोच्चारणेन क्रियमाणं कार्यं, तेन सप्तम्यन्तपदेन बोध्यमानेभ्यो वर्णेभ्योऽव्यवहितपूर्वमेव भविष्यति" । श्रुत्वेदं "इको यणचि" चिन्तयति यत् ईकारमच्त्वेन स्वीकरोमि चेत् कार्यं पूर्वं इकः स्थाने भविष्यति पूर्वं इक् "सु"-घटक उकारः अस्ति परं सः धकारेण व्यवहितोऽस्ति । अतः "उपास्य"पदघटक उकार एव अच् भविष्यति इति निश्चयसमकालमेव "श्रेयांसि बहुविघ्नानि" इमां सूक्तिं चरितार्थीकुर्वन् चतुर्णां यणां मध्ये विवादः सञ्जातः । प्रथमत्वेन यकारः ईकारस्य स्थाने गमनायोद्यतः परं वकारेण परास्तः, वकारोऽपि रकारेण, रकारोऽपि लकारेण, लकारः पुनः यकारेण को भविष्यति इति निश्चितं नास्ति । एषु केशाकेशि, मुष्टामुष्टि वा प्रचलति इमान् साहंकारान् तथाविधं दृष्ट्वा अहैतुकं स्नेहं प्रदर्शयन् अव्यवस्थां च दुरीकुर्वन् "स्थानेऽन्तरतमः" इति परिभाषासूत्रमागत्य कथयति— "एकस्मिन् स्थानेऽनेकेषामादेशप्रसङ्गे सदृशतम आदेशो भवति" अत्र सर्वकारवत् आरक्षणव्यवस्था नास्ति । सादृश्यं च चतुर्विधं भवति । (१) स्थानकृतसादृश्यम्, (२) अर्थकृतसादृश्यं, (३) गुणकृतसादृश्यं (बाह्यप्रयत्नकृतसादृश्यं) (४) प्रमाणकृतसादृश्यं (मात्राकृतसादृश्यं) । सादृश्यानीमानि लोकसदृशानि एव । चतुर्विधसादृश्यान्वेषणेन स्थानकृतसादृश्येन ईकारस्य स्थाने यकारादेशं शत्रुवदभवत् । ईकारं निहत्य स्वयमेव तत्रोपविष्टवान् । एवमत्रेदं प्रत्यक्षमभवद्यद् परिभाषा सूत्रद्वयसहकारेण "इको यणचि" सूत्रेण इकः स्थाने यणः विधानं कृतवान् । "सु ध् य् + उपास्यः" इतिजाते, विश्वतोमुखानि सूत्राणि भवन्ति ते कार्यं कर्तुं कर्मयोगिवदुद्यता भवन्ति । लक्ष्यं विषयतावच्छेदकं वाधिगम्य झटिति गच्छन्ति । इदानीमागच्छति "अनचि च" इति सूत्रम्, कथयति च — "अचः परस्य यरः स्थाने द्वित्वं करिष्यामि यदि परे अच् न स्यात् ।" कार्यस्थलस्य "सु ध् य् ऽ उपास्यः" इत्यस्य निरीक्षणे कृते सति अवलोकितमनेन यत् प्रथमाक्षरे 'सु' इत्यत्र सकारोत्तरवर्ती उकारः अच् अस्ति तदनन्तरं यर् धकारः अस्ति एकस्य यरः स्थाने धकारद्वयमादिष्टं भविष्यति परं परे अच् भवेत् । सत्यम् अच् नास्ति तत्र तु यकारः अस्ति अतः लक्ष्यतावच्छेदकावच्छिन्नं स्थलं प्राप्तमविलम्बेनानेन शत्रुवदादेशो यरः धकारस्य स्थाने कृतमत्र एकधकारस्य स्थाने द्वित्वं सति "सु ध् ध् य् ऽ उपास्यः" इति स्थितिः सञ्जाता । अनन्तरमागच्छति "झलां जश् झशि"

अत्रापि "झशि" इत्यस्मिन्पदे सप्तमीमवलोक्य "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति सूत्रसहकारेण पूर्वधकारस्य स्थाने शत्रुवदादेशो भवति जश्त्वदकारः, तदा "सु द् ध् य् + उपास्यः" एषा स्थितिः सञ्जाता। आगच्छतीदानीं "संयोगान्तस्य लोपः" इति सूत्रम्, कथयति च — "संयोगान्तं यत्पदं तस्य लोपो भविष्यति" अत्र "सुधी" इति पदस्य "सु द् ध् य्" इत्यवस्थायां सञ्जातायां सत्यपि पदत्वमस्त्येव अतः सम्पूर्णपदस्य लोपः प्राप्तः, अर्थात् अस्य भवेददर्शनम्। विचारयन्तु भवन्तः एतावान् कृतो महान् प्रयत्नः क्षणे एव विफलत्वमेष्यति अतः अव्यवस्थामिमां दूरीकर्तुं "न्यायाधीशवदागतवान्" "अलोऽन्त्यस्य" इत्ययं योगः, उक्तमनेन यत् — "षष्ठ्यन्तं पदमुच्चार्य क्रियमाणं कार्यमन्त्यस्यैव वर्णस्थाने भविष्यति न सर्वत्र" प्रकृतेऽस्मिन् प्रसङ्गे "संयोगान्तस्य" इति षष्ठ्यन्तं पदमस्ति अनेन क्रियमाणं कार्य लोपकार्यमस्ति। अतस्तत्कार्यं केवलमन्त्यवर्णस्य "चकारस्य" स्थाने भविष्यति। अर्थात् यकारस्यैवादर्शनं भविष्यति न तु सर्वस्य। इत्थं न्यायदण्डं गृहीत्वा अनेन परिभाषासूत्रेण सम्पूर्णपदमदर्शनभवनात् संरक्षितं परं "च" कारः अरक्षितः सञ्जातः। झटित्येव कात्यायनमहर्षिणा आगत्य स्वीयेन वार्तिकेन "यणः प्रतिषेधो वाच्यः" इत्यनेन यणः लोपविधानं प्रतिषिद्धम् अतः यकारोऽपि संरक्षितः। इदानीमावश्यकता अस्ति, अस्य शब्दस्य यो वर्णसमूह इतस्ततः, तस्य योजनस्य अतः रज्जुवत्तिष्ठति परिभाषा "अज्झीनं परेण संयोज्यम्" इति अतः अज्झीना ये वर्णाः ते परेण संयोज्याः। "सु द् ध् य् + उपास्यः", अस्यामवस्थायां क्रमशः यकारः उकारेण सह, धकारः यकारेण सह, दकारः धकारेण सह सयोजनेन सुद्ध्युपास्यः" इति स्वरूपं सिद्धम्।

अत्र विचारणीयं यद्यस्मिन् पक्षे धकारस्य द्वित्वादेशं न भविष्यति तदा एकधकारः, अत्र जश्त्वमपि न भविष्यति अतः "सु ध् य् + उपास्यः" अस्यामेवावस्थायां वर्णसम्मेलनेन "सुध्युपास्यः" इति द्वितीयं रूपं सिध्यति।

अत्र "सुद्ध्युपास्यः" शब्दस्य सिद्धेः प्रक्रियाप्रदर्शनं लक्ष्यं नास्ति अपि तु येन सूत्रेण यत्कार्यं क्रियते तत्कार्यं केनापि सामाजिककथानकेन सह संयोज्य प्रदर्शिते सति बुद्धौ स्थिरीभवति रुच्युत्पादकञ्च भवति। जिज्ञासवः विद्यार्थिनो वा क्षिप्रमवगच्छन्ति चिरञ्च धारयन्ति। नीरसता अपि व्यपगता भवति।

व्याकरणशिक्षणस्य नूतनप्रविधिः (कथाप्रविधिः)। अभिप्रायावबोधनाय 'कथा' प्रविधिः। शब्दार्थावबोधनाय प्रथमे अङ्क प्रशिक्षणमिव शब्दरूपाणां धातुरूपाणाञ्च शिक्षणम् भवेत्। मात्रायोजनमिव कारकचिह्नप्रयोगाय प्रशिक्षणं भवेत्। गाणितस्य योजनविधिमिव पदार्थावबोधनस्य प्रशिक्षणं भवेत्। समविषमसंख्या बोधनमिव विशेषणविशेष्यभावसम्बन्धस्य प्रशिक्षणं प्रदेयम्। एवं शब्दार्थावबोधे जाते कथाप्रविधिं लोकव्यवहारप्रविधिमाश्रित्य परम्परागतव्याकरणस्य शिक्षणं भवति। यथा— पूर्वदर्शितम्।

व्याकरणं च कथं सरलतमं भवेदिति विषयमवलम्ब्य केन माध्यमेन पाठितं सद् व्याकरणं व्याकरणं न स्यादपि तु कश्चिद् कथानकं स्यात् यत्रोत्तरं जिज्ञासा वर्धत एव, यत्र विद्यार्थी, श्रोता, जिज्ञासुः, शिष्यो वा दत्तावधानः सन् व्याकरणस्य सिद्धान्तानां ज्ञानं रुचिं वर्धयेत् संलग्नो च भवेत्।

# वर्तमानशिक्षानीतिः संस्कृतस्य स्थितिश्च

डॉ. वि. मुरलीधरशर्मा

**राष्ट्रियशिक्षानीतिः**

राष्ट्रस्य आवश्यकताः, आदर्शान् , संस्कृतीः, भावनाश्चाधारीकृत्य निरूपिता सती सर्वैः समानाधिकारेण लभ्यमाना शिक्षा राष्ट्रियशिक्षा । तदर्थं सर्वस्तरेषु या च सुसङ्घटितशिक्षाव्यवस्था केन्द्रसर्वकारेण विधीयते सैव राष्ट्रियशिक्षानीतिः ।

प्रत्येकमपि राष्ट्रं स्वीयं सामाजिकं सांस्कृतिकञ्च वैशिष्ट्यमभिव्यञ्जयितुं सामाजिकसमस्याः समाधातुञ्च स्वीकीयां विशिष्टां शिक्षाप्रणालीं विकासयति । भारतमपि तादृशीं कामपि विशिष्टां शिक्षाप्रणालीं धत्ते या राष्ट्रियशिक्षानीतिनाम्ना चकास्ति । विविधविषयैर्मण्डिता, परिष्कृता, परिवर्धिता सती शिक्षानीतिरियं १९८६ तमे वर्षे 'मे' मासि लोकसभायां प्रस्तुता । स्वतन्त्रभारते १९६८ तमे वर्षे काचन शिक्षानीतिरुदघोषि केन्द्रसर्वकारेण । ततः परं १९७९ तमे वर्षे शिक्षासम्बन्धिप्रस्तावः कश्चन तेन विहितः । ततः परं तृतीया नवशिक्षानीतिः १९८६ तमे हायने उदघोष्यत । पूर्वोद्घोषितयोरपेक्षया नीतावस्यां नवीनविषयाः, विकासात्मकाः, सामयिकाश्च चर्चिता इतीयं राष्ट्रियशिक्षानीतिः नवशिक्षानीति नाम्ना प्रथिता विभाति ।

शिक्षानीतावस्याम् आ शिशुशिक्षायाः विश्वविद्यालयशिक्षां यावत् शिक्षास्वरूपं कथं स्यात्, तत्प्रसारश्च कथं कार्यः इति विषये नियमाः निर्धारिताः । तथैवात्र प्रौढशिक्षा, मूल्याङ्कनप्रक्रिया, सांस्कृतिकपरिप्रेक्ष्यम्, भाषाविकासः इत्यादयोऽतिमहत्त्वपूर्णा विषयाः समचर्चिषत । तदनु तद्विषयककार्ययोजनाश्च क्रियान्विताः समभवन् ।

राष्ट्रियसामाजिकसांस्कृतिकावश्यकताः परिपूरयितुं प्रवर्तितायामस्यां नीतावश्यं संस्कृतविकासार्थं तच्छिक्षायाः विशिष्टयोजना कापि स्यादिति, १९६८ वर्षीयशिक्षानीतौ कल्पितः संस्कृतस्थानाभावोऽत्र अवश्यं तत्प्रतिष्ठापनेन परिपूर्यत इति आशास्य तदर्थं प्रतीक्षमाणस्य संस्कृतलोकस्य अनया नवीननीत्या आशाभङ्ग एव कृतः । १९६८ तमशिक्षानीताविव अस्यामपि प्रवर्तमानशिक्षानीतौ विद्यालयशिक्षायाः प्राणभूते त्रिभाषासूत्रे संस्कृतस्य स्थानमेव न कल्पितम् । 'भाषाविकास' इत्याख्यविभागे भाषाविषयकविचारप्रसङ्गे १९६८ वर्षीयशिक्षानीतौ यत् त्रिभाषासूत्रं निरधार्यत तदेवात्र पुनरावर्तितम् । अत्रोक्तं— '१९६८ वर्षीयायां शिक्षानीतौ भाषाविकासविषयिणी चर्चा सविशदं विहिता । सैव नीतिः साम्प्रतमपि अनुसरणीया । परं पूर्वापेक्षया द्विगुणीकृतोत्साहेन, समधिगतशक्त्या च अस्याः कार्यन्वयनं भवेत्' इति ।

तदनुरूपं वर्तमानशिक्षानीतौ निर्धारितं, साम्प्रतं प्रवर्तयमानञ्च त्रिभाषासूत्रमित्थमस्ति ।

## वर्तमानं त्रिभाषासूत्रम्

हिन्दीभाषिराज्येषु — मातृभाषा/प्रादेशिकभाषा

आङ्गलभाषा

आधुनिकभाषा/दक्षिणभारतीयभाषास्वन्यतमा ।

हिन्दीतरभाषिराज्येषु — मातृभाषा/प्रादेशिकभाषा

आङ्गलभाषा

हिन्दीभाषा

भाषाविषयकप्रसङ्गेऽत्र ३(d) इत्यंशे "शास्त्रीयभाषाणां (Classical Languages), विशिष्य संस्कृतस्य महत्त्वं समभिवर्ण्य आसां शिक्षणं विद्यालयस्तरे तृतीयभाषास्तरे उदारतया कल्पनीयम्" इत्युल्लिखितम् । ३(e) इत्यत्र हिन्दीभाषायाः आंगलभाषायाश्च वैशिष्ट्यमुङ्घोष्य तयोरध्ययनावश्यकता प्रतिपादिता ।

वर्तमानशिक्षानीतौ, विभिन्नस्थलेषु मातृभाषा हिन्दीआंगलसंस्कृतभाषाणां महत्त्वं, तासाम् अध्ययनावश्यकता च न्यरूपि । परं भाषासूत्रे भाषाप्रवेशनप्रसङ्गे तु संस्कृतं परित्यक्तम् ।

अनेनैवं भाति यत् नीतिनिर्धारकाः भाषाचतुष्टयस्य प्राधान्यमङ्गीकुर्वन्तः एव त्रिभाषसूत्रे चतसृणां स्थानं कल्पयितुमशक्तास्सन्तः एका भाषा त्याज्येति निर्धार्य औचितिमविमृश्य संस्कृतं त्यक्तवन्त इति ।

वस्तुतः भारते, यत्र १६५२ मातृभाषास्सन्ति, विविधधर्माः, विभिन्नसंस्कृतयश्च सहैवतिष्ठन्ति तत्र सर्वा-मोदयोग्यस्य भाषासूत्रस्य सर्जनं क्लेशकरमेव ।

मातृभाषाध्ययनमन्तरा बालानां व्यक्तित्वविकासः पङ्गुर्जायते । अतः न सा सर्वथा त्याज्या । सम्पर्कभा-षात्वेन राष्ट्रभाषात्वेन च प्रतिष्ठिता हिन्दीभाषाऽपि न परिहरणीया । अतस्सा अध्येयैव । अन्तर्जातीयभाषात्वेन विज्ञानवाहकत्वेन च समादृता आंगलभाषा नितरामध्येया ।

परं संस्कृतं, या भारतीयसनातनसंस्कृतेः मूलाधारा, यामन्तरा भारतीयस्य भारतीयतैव न सिद्ध्यति सा भारकारणेन अध्येतुं न शक्या । इत्थमेभिः कारणैः त्रिभाषासूत्रे संस्कृतभाषा परित्यक्ता ।

शिक्षायाः मूलभूतस्तरे, तन्नाम माध्यमिकस्तरे, यत्र छात्राः औचित्याचित्यं, कार्याकार्यञ्च विमर्ष्टुम् अभ्यस्यन्ति तादृशे स्तरे अस्मत्सनातनसंस्कृतिसम्पोषिकायाः संस्कृतभाषायाः परित्यागः व्यक्तित्वविकासस्य कुठाराघात एव । विशिष्य यस्मिन् समये मानवीयमूल्यह्रासससमस्यां (Value Crisis) सम्मुखीकुर्वन्तः बहवो देशाः स्वीयभाविनागरिकेषु सत्याहिंसाप्रेमकरुणाद्युदात्तमूल्यानां प्रवर्धनार्थं स्वीयशिक्षाप्रणालीं तदनुकुलां सम्पादयन्तः पुनारचयन्तः सन्ति, तादृशे समये अमूल्यमूल्यपोषयित्री संस्कृतभाषा स्वजन्मभूमावेव (शिक्षानीतौ) स्थानं न प्राऽऽप्नोदिति महतः खेदस्य विषयः । परं किमिदं प्रस्तुतशिक्षानीतौ प्रस्तुतं भाषासूत्रं सर्वजनादृतं प्रायोगिकं

वेति प्रश्नस्य नेत्येव समाधानम् । प्रसङ्गेऽस्मिन् 'राष्ट्रियशिक्षानीतेः कार्ययोजना' नामके पुस्तके उल्लिखितांशाः केचन अवधेयास्सन्ति ।

(१) त्रिभाषासूत्रस्य कार्यान्वयनात्परमपि बहुषु राज्येषु माध्यमिकस्तरे भाषासूत्रमनुसृत्य सर्वा अपि भाषा अनिवार्यतया नाध्याप्यन्ते ।

(२) हिन्दिभाषिराज्येषु दक्षिणभारतीयभाषाणामध्ययनाय पर्याप्तं सौविध्यं न कल्पितम् ।

(३) केषुचित् राज्येषु आधुनिकभारतीयभाषास्थाने छात्रैः संस्कृतं स्वीक्रियते ।

अतः इदं त्रिभाषासूत्रं न केवलं संस्कृतलोकस्य प्रत्युत समग्रभारतस्यैव आमोदयोग्यं, आरोग्यकरञ्च न । अतः साम्प्रतं नूतनस्यैव, सूत्रस्य आवश्यकता वरीवर्ति ।

साम्प्रतमहमस्यां पण्डितवेतण्डमण्डलीमण्डितायां सभायां नूतनं त्रिभाषासूत्रमेकं प्रस्तौमि यत् प्रायः सर्वजनामोदयोग्यं भवितुमर्हति । सूत्रमिदं विदुषा डॉ. आर्. देवनाथमहाभागेन समारचितम् । एतत्सूत्रसर्जने

१. सर्वैः शिक्षायोगैः प्रस्तुतानि त्रिभाषासूत्राणि सुविमृष्टानि ।

२. सांवैधानिकाः भाषाविषयकविचाराः परिशीलिताः ।

३. एकस्मिन्नेव वर्षे भाषाचतुष्टयाध्ययनभारः छात्रे यथा न पतेत् तथा समीहितम् ।

| आयुः 1 to 2 | 3 to 5 | 6 to 8 | 9 to 10 |
|---|---|---|---|
| (i) मातृभाषा/ प्रान्तीयभाषा | (i) मातृभाषा/ प्रान्तीयभाषा | (i) मातृभाषा/ प्रान्तीयभाषा | (i) मातृभाषा/प्रान्तीयभाषा |
| | (ii) आङ्गलभाषा | (ii) आङ्गलभाषा | (ii) आङ्गलभाषा |
| | (iii) हिन्दी | (iii) संस्कृतम् (हिन्दीतरभाषिराज्येषु) संस्कृतम्/शास्त्रीयभाषा (हिन्दिभाषिराज्येषु) | (शास्त्रीयभाषाः) |

नवशिक्षानीतौ अन्यत्रापि संस्कृतविकासचर्चा विहिता । तथाहि—

संस्कृते भारतीयविद्यायाञ्च अन्तर्विषयकानुसन्धानस्य विकासः

नवशिक्षानीतौ 'भाषाविकासः' इत्याख्ये अंशे—

"भारतीयप्राचीननिधेः अन्वेषणार्थम् आधुनिककाले तस्य प्रासङ्गिकतायाः निरूपणार्थञ्च भारतीयविद्यायाम् अनुसन्धानस्य महत्त्वं कल्पितम् । अस्मिन् प्रयत्ने संस्कृतस्य, अन्यप्राचीनभाषाणां च गहनाध्ययनार्थं पर्याप्तसौविध्यानि विकासनीयानि" इत्युद्घुष्टम् ।

अत्र एतदयुक्तं— यत् "संस्कृतप्राकृतादिभाषासु उपलभ्यमानस्य ज्ञानस्य अनुभवस्य च समकालीन वैज्ञानिकप्रौद्योगिकविकासाभ्यां तुलनाद्वारा वैधतायाः, सम्बन्धस्य च स्थापनार्थं भारते न किमपि प्रामाणिकं कार्यं विहितम् इति ।

एतदर्थं नवशिक्षानीतौ प्रस्तुता कार्ययोजना

(नवशिक्षानीतेः कार्ययोजनायाम् इमे अंशाः समुल्लिखिताः ।)

(१) भारतीयविद्यायाः प्राचीनभाषाणाञ्च विकासार्थम् अन्ताराष्ट्रियस्तरीयसंस्थायाः स्थापनार्थं (सप्तमपञ्चवर्षीययोजनायाम् एषः प्रस्तावः कृतः) प्रस्तावः अग्रेसारितः ।

अस्मिन् विशिष्टक्रियान्वयने—

(१) मन्त्रालयेन एतत्संस्थापनार्थं दृढनिश्चयः करणीयः ।

(२) तस्याः प्रतिष्ठापनार्थं धनराशिव्यवस्था करणीया ।

(३) तस्याः पञ्जीकरणम् ।

(४) संविधानोपनियमादीनां सन्नद्धीकरणम् ।

(५) शैक्षिकशिक्षणेतरकर्मचारिणां नियुक्तिः कार्या ।

(६) एवंविधसंस्थायाः संरचनायाः, भूमिकायाश्च सन्नद्धीकरणार्थं विभिन्नक्षेत्रेभ्यः चितानां विशेषज्ञानां समितिः संरच्यते । एतत्कार्यं यथाशीघ्रं सम्पूर्यते— इत्युल्लिखितम् ।

परन्तु नवशिक्षानीतेः प्रस्तुतेः पञ्चदशवर्षाणामनन्तरमपि एतस्यो दिशि न कोऽपि प्रमाणिकप्रयत्नो विहित इतीदं तथ्यं सर्वविदितमेव । इयं हि वर्तमानशिक्षानीतिः तस्यां संस्कृतस्य स्थितिच ।

# उपनिषत्कालिकशिक्षायाः महत्त्वम्

डॉ. जगदीशराजशर्मा

शिक्षाया अवधारणा पुराकालतः सततं प्रचलति । वस्तुतः शिशुः समाजे पशुतुल्यं जन्म प्राप्नोति । परमसौ यथार्थरूपेण तदैव मानवाख्यां भजते यदा स शिक्षाग्रहणं करोति ॥[१]

शिक्षया बालकस्य शारीरिकः, मानसिकः, बौद्धिक, सामाजिकश्च विकास उन्नतिश्च भवति । एतैर्गुणैर्युक्तो बालकः समाजस्य कृते लाभप्रदः सदस्यो भवति । शिक्षा व्यक्तिसमाजयोर्हितं विदधाति अनिवार्यमस्ति । समाजस्योत्थानं शिक्षितैरेव सम्भाव्यते ॥

'शिक्षा' शब्दः आंग्लभाषायाम् एजूकेशन (Education) इति आख्यायते । एषः शब्दः लेटिन-भाषाया 'एजूकेटम् (Educatum) शब्दात् निष्पन्नः । एजूकेटम् (Educatum) शब्दस्य निष्पत्तिः 'इ' (E) + केटम् (Catum) इति शब्दद्वयस्य योगेन भवति । इ (E) शब्दस्यार्थः 'इन्टर्नल' (Enternal) अर्थात् आन्तरिकं ज्ञानमस्ति । 'केटम्' (Catum) शब्दस्यार्थः ज्ञानस्याभिव्यक्तिः 'इति' मन्यन्ते ।[२] अतः शिक्षाशब्दस्य तात्पर्यं बालकस्य मस्तिष्के पूर्वतः विद्यमानस्य ज्ञानस्य केवलं बाह्याभिव्यक्तिरस्ति ॥[३]

केषांचित् विदुषां मते 'एजूकेशन' (Education) शब्दस्य निष्पत्तिः लेटिनभाषायाः 'एडयूकेअर' (Educere) इति शब्दात् जायते । 'एड्यूकेअर' (Educere) शब्दस्यार्थाः विद्यन्ते —

१. शिक्षाप्रदानम् (To Educate)

२. बाह्याभिव्यक्तिः (To bring out)

३. अभिव्यक्तिः (To draw out)

४. शिशोरान्तरिकशक्तेरुद्बोधनम् (To raise the eternal power of the infant)

---

१. Principles of Education — B.R. Taneja, p.50

२. Principles of Education — B.R. Taneja, p.50

३. Ibid.

'एड्यूकेअर' (Educere) शब्दस्यार्थस्तु विशिष्टः कश्चित् प्रशिक्षणक्रमः (The Act of Special Training), उद्बोधनकार्यम् (To bring out) उत वा 'अन्तःकरणशक्तेः बाह्याभिव्यक्तिरपि अस्य शब्द-स्यार्थः । (Leading out of knowledge)[१]

संस्कृतभाषायां 'एजूकेशन्' (Education) इत्यस्य कृते 'शिक्षा' शब्दः प्रयुज्यते । भौवादिकात् धातोर्भावे अप्रत्ययः, शिक्ष्धातोः स्त्रीत्वविवक्षायां टापि शिक्षाशब्दो निष्पद्यते ।[२] यस्य अर्थाः विद्यायाः ज्ञानस्य वा प्राप्तिरस्ति । 'शिक्षा' शब्दस्य प्रयोगे वेदानां षडङ्गेषु एकस्याङ्गस्य समुपलब्धिर्यथा —

> **छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।**
> **ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥**
> **शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।**
> **तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥**[३]

अर्थात् अत्र शिक्षाकल्पव्याकरणनिरुक्त ज्योतिषम् छन्दः शास्त्राणि वेदाङ्गत्वेन स्वीकृतानि सन्ति । अत एवोक्तम् —"शिक्षा घ्राणं तु वेदस्य"[४] अस्यायमाशयो वर्तते यत् शिक्षा वेदस्य नासिकात्वेन अभिधीयते । तत्र शास्त्रे मुख्यरूपेण वर्णानामुच्चारणस्थानम्, साधूच्चारणस्य क्रमः, शब्दस्यार्थविवेचनम् ध्वनिविषयकं वर्णोच्चारण प्रयत्नादीनि विशिष्टविषयाः संगृहीतानि च । वेदानामध्ययनक्रमे शुद्धोच्चारणार्थम् अत्यन्तमपेक्षिताः उदात्तानु-दात्तस्वरितादिनियमविषया अपि अस्यां शिक्षायां सम्यग् वर्णिताः सन्ति[५] । इत्थम् वेदाङ्गशिक्षाविषयोऽस्माभिः विविच्यमानशिक्षाविषयापेक्षया स्वाल्पमेव विषयं वर्णयति । अद्यापि एते विषयाः भाषाशिक्षणे अत्यन्तमुपयुक्ता उपकारकाश्च सन्ति । अतः शिक्षाशास्त्राध्येतृभिःवेदाङ्ग शिक्षाविषयोऽवश्यमेवाध्येयः ।

शिक्षायाः विद्यया सह विद्यते नैकट्यम् । यतो हि, 'विद्' ज्ञाने इत्यस्मात् धातोः क्यपि टापि च कृते 'विद्या' इति शब्दो निष्पद्यते[६] । यद्यपि 'विद्या' इत्यस्यार्थः 'शिक्षा' इति कैश्चिदुच्यते, तथापि सामान्यतः विद्याया अर्थः 'ज्ञानम्' । इत्थम् शिक्षया विद्याया उपार्जनं भवति । इत्यस्मात् कारणात् यदा कदाचित् विद्याया अर्थ. शिक्षापि उच्यते ।अत एव "सा विद्या या विमुक्तये"[७] इति श्रुतिवचनं युज्यते । अतो हि विद्याशब्देन सामान्यतः शिक्षा इत्यर्थस्य ग्रहणं युक्तं भवेत् । अनेन क्रमेण प्राचीनभारतीयशिक्षाया उद्देश्यं विमुक्तिः; अर्थात् मोक्षसाधनं मन्यते

---

१. The Foundation of Education, B.R. Taneja, p. ५०
२. सिद्धान्तकौमुदी, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, १९८५ संस्करणम्, पृ. ३५०
३. पाणिनीय शिक्षा, चौखम्बा संस्कृत सीरीज् आफिस वाराणसी, श्लो. ४१-४२, पृ.— २०
४. तत्रैव
५. पाणिनीय शिक्षा, पृ. ४२
६. संस्कृत हिन्दी कोश, शिवराम आप्टे, १९८८, पृ. ९३५
७. प्राचीन भारतीय शिक्षा, —ए. एस. अलतेकर, पृ. ३ उद्धृतः ।

स्म । अत एव वक्तुं शक्यं यत् प्राचीनभारते शिक्षायाः एकोऽर्थस्तु विद्यापि भवति स्म । तस्याः विद्यायाः स्वरूपम् उपनिषत्सु सम्यङ् निरूपितम् । तस्य विवेचनमत्र प्रासंगिकं मत्वा तन्निरूप्यते । तथा हि—मुण्डकोपनिषदि

'द्वे विद्ये वेदितव्ये' इति ।

ह स्म यद्ब्रह्मविदो वदन्ति,

परा चैवापरा च ॥'[१]

अर्थात् विद्या द्विविधा भवति —

(१) परा विद्या — सूक्ष्मं ज्ञानम् (subtle knowledge)

(२) अपरा विद्या — सांसारिकं ज्ञानम् (worldly knowledge)

'अथ परा यया तदक्षरमधिगम्यते[२]' — अर्थात् सा परा विद्या यया अविनाशि ब्रह्मविषयकं ज्ञानमवबोध्यते । तस्या वर्णनं वेदेष्वपि कृतमस्ति । अतो वेदेषु उत वा अन्येषु ग्रन्थेष्वपि वर्णितम् आध्यात्मिकं तत्त्वं पराविद्या इति मन्यते ।

अपरा विद्या तु भौतिकं ज्ञानम् ।

तत्र तावत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति निहितं वर्तते[३] । अत्र अन्ये सांसारिकाः विषया अपि अपरा विद्याया अन्तर्गताः गण्यन्ते । 'उपनिषद्' दर्शनशास्त्रस्य आकरः कथ्यते । उपनिषदां महत्त्वं सुविख्यातमस्ति । तास्तु आध्यात्मिकज्ञानस्य प्रभवः । उपनिषद्ग्रन्थाः सत्यं ज्ञातुमात्मानं समष्टिगतं कर्तुं च सहायकाः[४] ।

चतुर्णां वेदानामन्तिमत्वात् एताः वेदान्त इति कथ्यन्ते । अर्थात् वेदस्य अन्तः वेदान्तः । तासु आध्यात्मिकसिद्धान्तानां प्रतिपादनं कृतमस्ति । वेदार्थनिर्णयात्मकं शास्त्रं 'पूर्व मीमांसा' इति तथा तस्या मीमांसाशास्त्रस्य द्वितीय च भागः उत्तरमीमांसा वेदान्तः इति नामभ्यां निर्दिश्येते[५] ।

'वेद'शब्दः 'विद्' - ज्ञाने इत्यस्मात् धातोः निष्पन्नः । वेदेषु तादृशः मार्गः प्रदर्शितः येन मार्गेण आध्यात्मिकविचाराणां साक्षात्कारः । असौ आध्यात्मिकः साक्षात्कारः प्रत्यक्षावधारणया अन्येन वस्तुना वा अधिगन्तुं न शक्यते; वेदज्ञानेनैव अधिगम्यते । अनेन वेदानां महत्त्वं स्वत एव परिलक्ष्यते[६] ।

---

१. मुण्डकोपनिषद् १/४, पृ. १९२

२. तत्रैव, पृ. १९२

३. तदेव

४. Upanishadas - Society of Recitation, Calcutta, p. 2.

५. पातञ्जलयोगप्रदीपः, पृ. २३

६. Upanishadas — Society of Recitation, Calcutta, p. 3.

उपनिषदिति शब्दस्यार्थः—'उपनिषद्' ब्रह्मविद्यापि कथ्यते । उपनिषत्सु आध्यात्मिकविचाराणां प्रतिपादनं कृतमस्तिं । 'उप' नि पूर्वकात् 'षद्लृ' धातोः क्विप्प्रत्यये कृते सति 'उपनिषद्' शब्दः निष्पद्यते[1] ।

१. विशरणं = नाशः

२. गतिः = प्राप्तिः

गतिरित्यस्य त्रयोऽर्थाः — ज्ञानं गमनं प्राप्तिश्च ।

३. अवसादनम् — शिथिलीकरणम्

एवं उप+नि+सद्+क्विप्—उपनिषद्—निष्पद्यते ।

उपनिषत्सुः प्रतिपादितैः विषयै कर्मबन्धनेभ्ये मुक्तिः, अविद्यायाः नाशः, ज्ञानस्य प्राप्तिश्च भवति ॥

उप—ब्रह्मसमीपं, नि—निश्चयेन सीदति—प्राप्नोति यया सा उपनिषद् । ब्रह्मज्ञानं तु गुरुसकाशादेव लभ्यते । ज्ञानमिदं रहस्यात्मकम् । अत एव रहस्यात्मकस्य ज्ञानस्य कृते उपनिषदितिशब्दः व्यवह्रियते[2] । प्रकारान्तरेण एवमपि कथयितुं शक्यते यत् यया विद्यया ज्ञानेन वा ब्राह्मणः सामीप्यं साक्षात्कारो वा भवति सा एव विद्या ज्ञानं वा उपनिषदस्ति[3] ॥

इयमेव विद्या ब्रह्मविद्या ब्रह्मज्ञानञ्च कथ्यते । ब्रह्मविद्यायाः प्रतिपादकत्वात् ज्ञानमिदं 'उपनिषद्' इति कथ्यते ॥

उपनिषदाम् अवधारणा — वेदान्तदर्शनेन स्पष्टमिदं यत् सम्पूर्णब्रह्माण्डस्योत्पत्तिकारणं ब्रह्म । 'जन्माद्यस्य यतः'[4] अर्थात् यस्माद् ब्रह्माण्डस्य उत्पत्तिः, स्थितिः लयश्च भवन्ति तदेव ब्रह्म । ब्रह्म एव उपनिषदां प्रमुखः प्रतिपाद्यविषयः, तस्य वर्णनञ्च तेषां प्रधानलक्ष्यम् ॥

डॉ. राधाकृष्णमहोदयस्य मते 'उपनिषदः' वेदानामन्तिमे भागे वर्तन्ते अत एव एताः वेदान्त इति संज्ञां लभते । अनेन एतदपि व्यज्यते यत् उपनिषत्सु वैदिकशिक्षायाः सारो विद्यते । उपनिषदः भारतीयदर्शनस्य धार्मिकश्चाधारस्तम्भः[5] । अस्मादपि कथनात् उपनिषदो ज्ञानकरत्वम् सिध्यति ॥

उपनिषदः प्राचीनास्तासु प्रतिपादिताः विचाराः प्राचीनाः, दर्शनं तत्रत्यं प्राचीनतमम् । परन्तु ते विचारा तद्दर्शनं च अद्यत्वेऽपि अतीवनूतनाः ते विचारा आत्मनः उद्धाराय मार्गदर्शनं कुर्वन्ति । सर्वेषु धार्मिकग्रन्थेषु स्वानुभूता आध्यात्मिकाः सिद्धान्ताः प्रतिपादिताः । उपनिषद्भिरपि मानवीयमूल्यानामनुभवानाञ्च प्रतिपादनं

---

१. (अ) वैदिक एजूकेशन, पृ. ४६७, (आ) वैदिक साहित्य और संस्कृति — आचार्यो बलदेवो उपाध्यायः, पृ. २४०
२. 'उपनिषदं भो ब्रूहि' — केन. उप, ४/७
३. ग्रह्यादेशः, छा. उप ३/५/२
४. उपनिषदों का तत्त्वज्ञान, पृ. ११
५. वैदिक साहित्य और संस्कृति — आचार्यो बलदेवो उपाध्यायः, पृ. २४०

अतनिष्ट[१] । अत एव एते विचाराः सिद्धान्ताश्च सार्वभौमिकाः सार्वजनीनाः सार्वत्रिकाश्च सन्ति । वस्तुतः एते मानवीयोदात्ताध्यात्मिकविचाराः सिद्धान्ताश्च प्रतीयन्ते ॥

ते सर्वेऽपि ग्रन्थाः येषु ब्रह्मविषयिणी चर्चा वर्तते उपनिषद इति कथ्यन्ते । एभिरुदाहरणैः स्फुटो भवति यद् उपनिषद्‌भिः मानवानां आध्यात्मिकज्ञानमन्तर्निहिता दृष्टिः, तर्कसंगताः दार्शनिकविचाराश्च प्रस्तुताः ॥

उपनिषत्काले महर्षयः मुनयश्च स्वस्वमस्तिष्केषु शिक्षायाः विभन्नानि उद्देश्यानि धारितवन्तः । तत्र निम्नोद्देश्यानि प्रमुखान्याहुः —

(१) ज्ञानार्जनम्

(२) चरित्रनिर्माणम्

(३) पुरुषार्थचतुष्टयप्राप्तिः

**ज्ञानार्जनम्**

उपनिषत्सु "सा विद्या या विमुक्तये" इतिमुख्यरूपेण चर्चितो वर्तते । उपनिषत्सु डिण्डिमघोषोऽपि श्रूयते—'ऋते ज्ञानं न मुक्तिः' अर्थात् ज्ञानं विना मुक्तिः न भवति । शिक्षायाः तात्पर्यं केवलं ज्ञानार्जनमस्ति इति— एतत् कथनं समीचीनं न प्रतिभाति; यतो हि केवलं पुस्तकीयज्ञानं शिक्षायाः तात्पर्यं भवितुं नार्हति । एतत् कथ्यते यत् विभिन्नशास्त्राणां ज्ञाने सति यदि मानवस्य अन्तर्दृष्टेः विकासो न जातस्तर्हि तेन शिक्षायाः समुपलब्धिर्नैव कृतेति मन्तव्यम् । सः अज्ञः अशिक्षितः एव गण्यते । क्रियावान् पुरुष एव वस्तुतः शिक्षितोऽस्ति । ज्ञानप्राप्तिप्रसंगे उपनिषत्सु महर्षिभिः स्वशिष्यान् उद्दिश्य कथितं निम्नवचनं शिक्षायाः महत्त्वं प्रतिपादयति —

"स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्"[२]

मुण्डकोपनिषदि कथितं वर्तते —

**भिद्यते हृदयग्रंथिः छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥**[३]

**चरित्रनिर्माणस्य उद्देशयम्**

चरित्रं निर्मातुम् उपनिषत्सु उपदेशाः सन्ति । मुण्डकोपनिषदि शिष्यस्य पात्रता विषये कथितमस्ति—

**तस्मै स विद्वानुपसन्नाय सम्यक्**
**प्रशान्तचित्ताय शमान्विताय ।**

---

१. उपनिषदो की भूमिका, डा. राधाकृष्णन्, पृ.१

२. तैत्ति. उप, १/११/२

३. मुण्ड. उप., २/२/८

**येनाक्षरं पुरुषं वेद सत्यं**
**प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥**[1]

प्रशान्ते आश्रमपरिसरे विद्वान् महात्मा आचार्यः स्वशरणागताय शान्तचित्तधारिणे शमदमादिसाधन-युक्ताय शिष्याय ब्रह्मविद्याया उपदेशति स्म। ब्रह्मविद्यां वेत्तुं प्रयत्नशीलः शिष्यः स्वभावतः चरित्रवान् भवति स्म।

उपनिषत्काले प्रारम्भादेव शिष्याय ब्रह्मचर्यस्य महत्त्वम् उपदिश्यते स्म। अनेन अन्तशुद्धिः भवति। सत्यभाषणाय उपदिश्यते। स्व गुरुजनान् मातापितरौ प्रति सम्मानप्रदर्शनार्थं उपदिश्यते स्म। 'सत्यं वद। धर्म चर। सत्यं परमं तपः। सत्यमेव परममायतनम् सत्यान्न प्रमदितव्यम्।' इति ॥

उपनिषत्कालीनशिक्षायाः प्रमुखमुद्देश्यं चरित्रानिर्माणम् आसीदित्येभिर्वाक्यैर्ज्ञायन्ते ॥

पुरुषार्थचतुष्ट्प्राप्तिः —मानवजीवस्य मुख्यमुद्देश्यम्। पुरुषार्थचतुष्टयप्राप्तिरेव भारतीयपरम्परायाम्। तत्र धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थः तत्र पुरुषार्थचतुष्टेप्रथमस्य।

पुरुषार्थस्य विषये उपतिषत्सु प्रकाशतिमस्ति—

धर्माद् परं नास्ति कश्चिद्। तेन हि नियम्यन्ते—'धर्मान्न प्रमदितव्यम्। सत्यं वद। धर्म चर।' इति ॥

उपनिषत्सु द्वितीयपुरुषार्थ स्यार्थस्य प्राधान्यमुपवर्णितम्। अर्थप्राप्तिः धर्मसम्मता भवेत्। यतो हि—

**"न वित्तेन तर्पणीयो मनुष्यः**[2]

उपनिषत्काले भूपशुगवाश्वगजसन्ततिक्षेत्रसुवर्णगृहादीनि रूपाणि प्रसिद्धान्यासन्। काम्यते इति कामः अर्थात् मनसि इच्छारुपेणोत्पद्यते थः स कामः इत्युच्यते। सोऽयंकामः सूक्ष्मातिसूक्ष्मरूपेण मनसि प्रस्फुटति। स्त्रीपुरुषयोः सम्बन्धः एव कामो न भवति। वस्तुतः धर्म एव कामस्याधारः प्रोक्तः। महाभारते उक्तम्—

**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥** इति।

अर्थात् उपभोगेन कामनानां वृद्धिर्भवति, न ताः शाम्यन्ति। वह्निः हविःप्रक्षेपेण वर्धते एव न तु तेन शाम्यति। एवमेव मानवानाम् अभिलाषो भोगेन न समाप्यते। भोगैः शरीरन्तु निर्बलं भवति परम् इन्द्रियाणि सबलानि भवन्ति। बृहदारण्यकोपनिषदि कथितं यत्—'सर्वा प्रवृत्तिः कामहैतुक्येवेति।'[3] अर्थात् मानवः स्वकार्याणि कामेन एव प्रारभते। यतो हि कोऽपि नरः यत्किञ्चिदपि कार्यं करोति तत्कार्यं कामस्य कारणेनैव सम्भवति। उपनिषदि कथितम् यत् 'अनन्ताः हि कामाः।'[4] इति। उपनिषत्कालीनाचार्यः समावर्तनावसरे शिष्यमेवमुदिशति—

---

१. मुण्ड.उप.,१/१३ पृ.२४
२. कठ.उप.,१/१/२७
३. बहहद - उप.,१/४/६
४. तत्रैव पृ ३/४

**आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ॥**[1]

अर्थात् आचार्याय दक्षिणार्थं वांछितं धनम् आनीय तस्य आज्ञया गृहस्थाश्रमे प्रविश्य सन्ततेः परम्परां वर्धयेत् ॥

अत एव प्रतीयते यत् उपनिषत्सु कामसेवनं शास्त्रानुकूलं सन्तुलननिर्देशपरमिति । अर्थात् कामस्य प्रवर्तनं जीवने धर्मसम्पादनार्थम् आवश्यकम् मन्यते स्म । तदपि शिक्षायाः महत्त्वपूर्णम् उद्देश्यमवश्यमेव स्मृतं भवेदिति स्पष्टंमज्ञायते ॥

मोक्षः — मोक्षः पुरुषार्थचतुष्टये अन्तिमः अर्थः प्रयोजनं वाऽस्ति । अयं परमपुरुषार्थो हि कथ्यते । 'मोक्ष' शब्दो 'मुद्' धातोः निष्पद्यते, यस्यार्थः बन्धरहितः स्वतन्त्रोऽस्ति । मुक्तेरनन्तरं गमनागमनचक्रं समाप्यते । अस्मिन् जगति त्रिविधं दुःखं वर्तते — (१) आध्यात्मिकम् (२) आधिभौतिकम् (३) आधिदैविकम् च ।[2] एतेभ्यः त्रिभ्यः दुःखेभ्यः निवर्तनमेव तथा चानन्दस्य ब्रह्मणः प्राप्तिरेव मोक्षः परमपुरुषार्थश्चास्ति । शतपथब्राह्मणे उक्तम् 'मृत्योर्मा अमृतं गमय ।'[3] इति । अर्थात् मृत्युतः मां अमृतं प्रति नय । उपनिषत्सूक्तम् —

**विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥**

अर्थात् यो मनुष्यः विद्ययाः अविद्यायाश्च कर्मज्ञानयोश्च तत्त्वमवगच्छति स कर्मणः अनुष्ठानैः मृत्युमुल्लंघ्य ज्ञान प्रभावेन अमृतमुपयुञ्जते । अर्थात् अविनाशस्वरूपम् आनन्दमयपरब्रह्मप्राप्तिरूपं मोक्षं लभते । मुण्डकोपनिषदि कथितं यत्—

**"नायमात्मा बलहीनेन लभ्यो**
**न च प्रमादात् तपसो नाप्यलिङ्गात्**
**एतैरुपायैर्यतते यस्तु विद्वान्तस्यैष आत्मा विशते ब्रह्मधाम ॥"**[4]

अर्थात् अयमात्मा बलहीनेन मनुष्येन न प्राप्यो भवति । प्रमादेन लक्षणरहिततपसा चापि न लभ्यः । परं यः प्रज्ञावान् साधकः एभिः उपायैः प्रयतते, तस्य आत्मा एव ब्रह्मधाम प्रविशति । "ब्रह्मविदाप्नोति परम्" ।[5] परमपुरुषार्थस्य प्राप्तिरेव उपनिषदां शिक्षायाः मुख्योद्देश्यमस्ति । निष्कर्षतः वयं कथयितुं शक्नुमः यत् उपनिषत्काले पुरुषार्थचतुष्टयं शिक्षायाः महत्त्वपूणमुद्देश्यम् आसीत् । अस्य उद्देश्यस्य प्राप्तये किमपि विशिष्टं जीवनदर्शनं स्वीकृतम् । तस्य जीवनदर्शनस्य आधारभूतः पक्षः— धर्मः अर्थः कामः मोक्षश्चासन् । पुरुषाणां जीवनस्य चत्वारि प्रयोजनानि निर्धारितानि आसन् । तानि प्रयोजनानि लब्धुं मानवजीवनं वर्णाश्रमव्यवस्थया सम्यक् व्यवस्थापितम्

---

१. तैत्ति. उप. एकादश अनुवाकः, पृ. २९८

२. सांख्यदर्शनम्, पृ. १३

३. शतपथब्राह्मणम्, पृ. १२२

४. मुण्ड-उप, ३/२/४

५. तैत्ति० उप०, २/१

आसीत् । ततः पूर्वं इह लोके सुखं जीवनं यापयतुं धर्मस्य अर्थस्य कामस्य च उपलब्धिः आवश्यकी आसीत् । तदनुसारमेव तदानीं शिक्षायाः व्यवस्था अभूत् । उपनिषत्कालीने शिक्षाक्रमे विद्यमानः ज्ञानानुरागः अद्यतनीय-शिक्षाक्षेत्रेऽपि सम्पादनीयाः । तथाकृते सति समाजे विद्यमानाः अव्यवस्थाः दुरवस्था आतंकवादादयश्च विषयाः स्वयमेव निराकृताः भवेयुः उपनिषत्काले शिक्षासंस्थाः आदर्शभूताः अनुकरणीयाश्च आसन् । तत्र शिक्षा व्याव-हारिकी जीवनोपयोगिनी च आसीत् । छात्राः सिद्धान्तस्यैव पठने तत्पराः न अभूवन् अपि तु पठितस्य विषयस्य जीवने व्यावहारिकोपयोगित्वमपि अनुभवन्ति स्म । शिक्षा भारभूता नासीत् । यथा अद्यत्वे ज्ञानं भारः क्रियां विना इति लोकोक्तिः समाजे मूर्तिमती भवति न तथा उपनिषत्काले आसीत् । शिक्षा सर्वथा जीवनोपयोगिनी आसीत् ॥

शिक्षासंस्थासु सदाचारयुक्ताः मानवजीवनमूल्यसम्पन्नाः विद्याध्येतृषु वात्सल्यपरिपूर्णाः कुलपतयः आसन् ।आचार्याः शिष्यान् सदा सर्वदा पुत्रमिव मत्वा तेषां संरक्षणं पालनपोषणं कुर्वन्तः तेभ्यः यथायोग्यं ज्ञानं यच्छन्ति स्म । तेभ्यः छात्रेभ्यः धनग्रहणस्य अन्यस्य वा कस्यचित् स्वार्थसाधनस्य अवसर एव नासीत् । तस्यां व्यवस्थायाम् आचार्याणां गुरूणां, कुलपतीनां, कुलाधिपतीनां चाचरणमेव शिक्षणात्मकं छात्राणां चरित्रनिर्मापकं चासीत् । गुरुभिः सह आवासः सहैव जीवनयापनव्यवस्था च गुरुषु विद्यमानान् गुणान् स्वतः एव छात्रेषु संक्रामयन्ति स्म ॥

अद्यत्वे विद्यमानशिक्षाव्यवस्थायां उपनिषत्कालीन आदर्शभूतः गुरुशिष्यसम्बंधः अवश्यमेव आने-तव्यः ।

गुरुशिष्योः सन्निकटपारस्परिकसम्बन्धं बिना छात्राणां चरित्रनिर्मणस्य कल्पनां कतुं न शक्यते । अतः उपनिषत्कालीनशिक्षाव्यवस्थायां विद्यमानं शिक्षासंस्थाव्यवस्थापनं गुरुशिष्यसंबधः व्यावहारिकज्ञानप्रदानस्य आयोजनम् उदात्तचरित्रसम्पन्नानां शिक्षकाणां शिक्षणालयेषु नियोजनं च अद्यापि शिक्षा व्यवस्थायाः दोषान् अपाकर्तुं शक्त भवति ।

# बृहत्संहितायां वनस्पति विज्ञानम्

—डॉ. सोमदेवशतांशुः

[लेखेऽस्मिन् बृहत्संहितायाः वृक्षविज्ञानविषयकाः वृक्षारोपणविधिः, बीजवपनविधिः, वृक्षकर्तादिषु गुणाधानं, वृक्षरोगकारणानि, तल्लक्षणानि, वनस्पतीनां पुष्पफलैः प्राकृतिकसुभिक्षुद्र्भिक्षादिज्ञान मित्यादयः विषयाः विवेचिताः—सम्पादकः]

विविधज्ञानविज्ञानभास्वरं संस्कृतवाङ्मयं भास्वान् इव भासयते भूलोकम्। वैदिकं तदनुवर्त्तिलौकिकं च साहित्यं सर्वविधज्ञानविज्ञानानाम् आद्यम् उद्भव स्थलम्।

पण्डितमण्डलमण्डनेन वराहमिहिरेण विरचिता बृहत्संहिता अमूल्यशेवधिकल्पा अलौकिक पाण्डित्य-प्रतिभापूर्णा विस्तृतज्ञानविज्ञानसंभृता वर्तते। वस्तुतस्तु ग्रन्थोऽयं प्राचीनभारतीयज्ञानविज्ञानानां विश्वकोषवत् चकास्ति संहितास्कन्धस्य अयमेक एव प्रतिनिधिग्रन्थः प्राप्यते। अस्य लोकप्रियतया अन्ये संहिताग्रन्थाः लुप्त-प्रायाः।

अस्मिन् ग्रन्थरत्ले सप्तोत्तरैकशताध्यायेषु ज्योतिषविषयाः ग्रहगतेः मानवजीवने प्रभावाः तडागखननं उद्यानीकरणं मूर्ति निर्माणं, गृहनिर्माणं गवाश्वहस्त्यादि पशुलक्षणं स्त्रीपुरुषलक्षणं रत्नलक्षणम् कामशास्त्रम् अर्थशास्त्रम् वास्तुविद्या, मूगर्भादिविद्या, भूगोलविद्या दर्कागलविद्या वनस्पतिविज्ञानशकुनशास्त्रादिविषया वर्णिताः।

बृहज्जातकस्य[1] एकेन श्लोकेन ज्ञायते यदयम् अवन्तिवास्तव्यः आदित्यदासपुत्रश्चासीत्। अस्य आविर्भावकालः षष्ठशताब्द्याः आरम्भिककालो मन्यते।[2]

बृहत्संहितायाः २९,४०,५५,५९ तमाध्यायेषु वनस्पतयः विविधाः विवेचिताः। यद्यपि वनस्पति शब्दः—फली वनस्पति"र्ज्ञेयः" इति केवलं पुष्पोद्गमं विना फलवतां उदुम्बरवटपिप्पलादीनामेव वाचकः परं वनस्पतिशास्त्रानुसारं सामान्येन समेषाम् उद्भिदां वाचकः। वेदचरकसुश्रुतनिघण्टुपारशरीयवृक्षायुर्वेदादिसंस्कृतग्रन्थेषु सर्वप्रथमं वनस्पतीनां विविधानि नामानि वर्गीकरणम् उत्पत्तिस्थलम् औषधीयगुणाः विशिष्टाकृतयश्च वर्ण्यतां गताः।

बृहत्संहितायाम् बीजवपनस्य विशिष्टविधिः, कालः, भूसंस्कार प्रकारः, वनस्पतीनां सद्यः संवर्द्धनोपायाः, विशिष्टसस्यफलप्राप्तिविधिः, वृक्षरोपणविधिः, वृक्षचिकित्सा, वनस्पतिक्रियाविज्ञानं, धान्यानां वृद्धिनिष्पत्तिविज्ञा-

१. आदित्यदासतनयस्तदवाप्तबोधः कापित्थके सवितृलब्धवर प्रसादः।
आवन्तिको मुनिमतान्यवलोक्य सम्यग् होरां वराहमिहिरो रुचिरां चकार॥

२. पञ्चसिद्धान्तिकायां गणितारम्भवर्षः ४२७ शकाब्दः ५०५ ईश्वीयः मतः। अतोऽस्य आविर्भावः कालः षष्ठशताब्द्याः आद्यभागे इति वक्तुं शक्यते

नम्, वृक्षाणां शुभाशुभत्वविषयाः सविस्तरं विवेचिताः। वनस्पतीनां संवर्द्धनाय उर्वरा मृत्तिका अभीष्टा। अत्र आचार्यो वराहमिहिरो ब्रूते "मृदोभूः सर्ववृक्षेभ्यो हितावहा। तत्र च वृक्षारोपणात् पूर्वं तिलान् उप्त्वा, पुष्पितेषु तेषु तत्र कर्षणेन [१]मर्दयेत्। अनेन वृक्षाः नीरोगाः सन्तः सद्यः संवर्द्धन्ते।

वृक्षारोपणकाल विषये. आचार्यस्य मताम् अकाण्डरोप्याः अजात शाखाः (बीजोत्पन्नाः वृक्षाः) शिशिरे (माघ फाल्गुनयोः) जातशाखाः हेमन्ते सुस्कन्धाः लम्बशाखाश्च वृक्षाः वर्षा ऋतौ रोपणीयाः। उत्तरात्रयं-रोहिणी-मृगशीर्ष-रेवती-चित्रा-अनुराधा-मूला-विशाखा-पुष्य-श्रवण-अश्विनी-हस्तनक्षत्रयुक्तकालः वृक्षरोपणाय उत्तमो मतः।

**वृक्षारोपण विधिः**

वृक्षारोपणविधिं —वर्णयन् आचार्यो ब्रूते "घृतोशीरतिलक्षौद्रविडङ्गदुग्धगोमयम् पिष्ट्वा तेन च मूलाग्रमुपलिप्य वृक्षम् संपूज्य रोपयेद्। एतेन तन्नाशो न जायते, सद्यः संवर्द्धते सुफलप्रदश्च भवति।"(तत्रैव. ५५/७-८)

वृक्षारोपणप्रकारोऽयं वेदनुगतो विज्ञानसम्मतश्च गोमयस्य महत्त्वं विवृण्वती भगवती श्रुतिः संपुष्णाति करीषिणां फलवतीं स्वधाम्।[२] अन्यच्च सुफलप्राप्तये घृतदुग्धमधूनाम् उर्वरकत्वेन उपयोगः अथर्ववेदेऽपि आम्नातः- "घृतेन सीता मधुना समक्ता"[३] इति। अस्य पक्षस्य पोषणे-

श्रीपाददामोदरसातवलेकरमहोदयेन स्वीये अथर्ववेदभाष्य अनेकानि ऐतिहासिकप्रमाणानि उपन्यस्तानि। यथा पुण्यपत्तने पेशवांवंशीयराज्ञां शासन काले पञ्चामृतोर्वरकप्रयोगेणारोपिता आम्रवृक्षाः अद्यावधि जीवन्ति मधुरतराणि फलानि च प्रयच्छन्ति। जलसेचनविषये आचार्यो ब्रूते[४] धर्मातो सायं प्रातः शीतकाले दिनान्तरे वर्षासु भुवः शोषे रोपिताः द्रुमाः सैक्तव्याः।

शाखारोपणकलमीवृक्षारोपणप्रसङ्गे अत्र उक्तम्—[५] पनस-अशोक-कदली-जम्बू-लकुच-दाडिम-द्राक्षा पालिवत-बीजपूर-अतिमुक्तकादिवृक्षाः काण्डारोप्याः सन्ति। छित्रेषु विजातीयवृक्षमूलेषु शाखासु वा गोमयेन उपलिप्य एतेषां शाखा आरोपणीयाः।

**विशिष्ट बीज वपन विधिः**

कस्यापि बीजं घृत हस्तेन सम्मर्द्य दशवासारणि दुग्ध भावितं गोमयेन बहुशो विरुक्षितं शूकर मृगमासैश्च धूपितं मांस शूकरवसासमन्वितं तिलशुद्धभूमौ उप्त्वा, दुग्धमिश्रजलेन च सेचनेन नूनं पुष्पयुक्तवृक्ष उत्पद्यते। अचिरं तस्मिन् वृक्षे पुष्पफलयोगो जायते इति वक्तुं शक्यते।[६]

---

१. वृहत्संहिता, ५५/२
२. अथर्ववेद. १९.३१.३
३. अर्थर्ववेद ३-१७-९
४. बृहत्संहिता ५५/९
५. बृहत्संहिता ५५/४-५
६. तदेव-५५/१९-२०

एवं तिन्तिडी वृक्षस्य शीघ्रोत्पत्तिविधि: कपित्थबीजस्य अचिरोत्पत्तिवृद्धिविधिश्चापि अत्र वर्णित: ।[१]

वृक्षाणां तत्क्षणोत्पत्तये अत्र उक्तम्-अङ्कोलफलकल्केन तैलेन वा श्लेष्मातकफलकल्केन तैलेन वा शतधा भावितं बीजं करकोन्मिश्रमृदि उप्तं सत् सद्य: संजायते शाखाश्च पुष्पफलभारान्विता: भवन्ति ।[२]

एवं श्लेष्मातकवृक्षस्य एकेनाह्ना फलयुक्तवृक्षोत्पत्ति: वर्णिता ।[३] एतत् सर्वं प्रयोगापेक्षं वर्तते । अस्य याथार्थ्यं च साधयित्वा जगतो महदुपकार: कर्त्तुं शक्यते ।

मद्ज्ञानानुसारं आधुनिक वनस्पति विज्ञाने एकेनैवाह्ना पुष्पफलयुतवृक्षस्य विचारणाऽपि मन्ये न कस्यापि मतोगता स्यात् । बृहत्संहितायां तु अस्य विस्तृतं विधानं वर्णितम् ।

**औषधि गुणयुक्त-अन्नफलादि प्राप्ति विधि:**

उक्त विधिना एतच्चापि अभिव्यज्यते यत् विशिष्टौधिभि: संभावितबीजवृक्षा: तत्तद्गुणयुक्तमन्नफलादिकमपि प्रयच्छन्ति । यथा च यजुषि अपि एतन्निर्दिष्टम्—

**सं वपामि समाप ओषधिभि: समोषधयो रयेन ।**

यजुर्वेद-१/२२

विशिष्टौषधिरसेन पयसामधुघृतादिना वा सिक्ता: पादपा: तद्गुणान् धारयन्ति । आधुनिकवनस्पति विज्ञानेऽपि विशिष्टरसायनप्रयोगेण वनस्पतीनां गुणा: परिवर्त्यन्ते परिवर्द्धयन्ते च ।

**वृक्षाणां फलराहित्यहेतु:**

वृक्षाणां फलराहित्यहेतुं निर्दिशन्नाह-अभ्यासजातास्तरव: परस्परं स्पृशन्त: मिश्रमूला: पीडिताश्च पादपा: न फलन्ति सम्यग् । अत: फलवृद्धये उक्तदोषा: दूरीकरणीया: । (५५/१३)

**वृक्षरोगकारणानि**

अत्र वृक्षाणां रोगकारणानि तल्लक्षणानि चापि निर्दिष्टानि । शीतवातापाधिक्यात् वृक्षेषु रोगा: जायन्ते ।[४] अत्र कृमिकीटादिजन्यरोगाणां चर्चा न विहिता । मन्ये कीटादिजन्यरोगाणामपि मूलकारणम् ऋतुर्वैषम्यमेव । यदि समुचित: शीतघर्मादि न जायते तदैव कीटा: जायन्ते नान्यथा । अत: शीताताताधिक्यं रोगकारकमिति कथनं निर्दुष्टम् समुचितं प्रतिभाति ।

---

१. तदेव-५५/२१-२६

२. शतशोऽङ्कुलसम्भूतफलकल्केन भावितम् । एततैलेन वा बीजं श्लेष्मातकफलेन वा ।
वापितं कारकोन्मिश्रमृदि तत्क्षण जन्मकम् फलभारान्विता शाखा भवतीति किमद्भुतम् ।

३. तदेव ५५/२९-३०

४. शीत वातातपै रोगो जायते– तत्रैव-५५/१४

## वृक्षरोगलक्षणानि

वृक्षाणां रोगलक्षणानि निर्दिष्टानि[१] पाण्डुपत्रता-अवृद्धिश्च प्रवालानां, शाखाशोषो रसस्रुतिरिति । आधुनिकविज्ञानदृशा एतानि- (chlorosis of leaves, falling of buds, Drying up of branches and Exydation of Sap. उक्तरोगाणां चिकित्सार्थं पूर्वं रोगग्रस्ताः भागाः शस्त्रेण छेद्याः ततश्च विडङ्गघृतकर्दमैश्च वृक्षमुपलिप्य दुग्धमिश्रतोपसेकेन सर्वशाखिनां रोहणं[२] भवति । रोगाश्च अपगच्छन्ति ।

वृक्षाणां फलनाशरोगं फलराहित्यदोषं वा अपनेतुं कुलत्थमाषमुद्गतिलयवान् दुग्धे श्रात्वा शीतेन शीतेन पयः सेकेन नूनं समेषां फलपुष्पसमृद्धिःर्जायते ।[३]

वनस्पतीनां सर्वविधवृद्ध्यर्थं अविकाजशकृच्चूर्णस्य आढके द्वे तिलाढ़कमेकम् सक्तु एकप्रस्थम्, एकं जलद्रोणं (मृत) गोमांसं तुलापरिमितं एतद्द्रव्यजातं सप्तरात्रम् उषितं कृत्वा तत्सेचनेन सर्वेऽपि वृक्षवनस्पतिगुल्मलताद्याः सर्वदा पुष्पफलयुताः भवन्ति ।[४] एतत् उर्वरकं दोहदं वा बहुधा प्रयोगसिद्धं वर्तते । एवं विधविविधदोहरदप्रदानेनअकालकुसुमजननादिसम्भवः कौटिल्यार्थशास्त्रे अग्निपुराणे रत्नावलीनाटिकादिषु अपि संदृश्यते ।

## वनस्पतीनां पुष्पफलैः प्राकृतिक सुभिक्षदुर्भिक्षादि ज्ञानम्

वनस्पतीनाम् उपचयापचयेन प्राकृतिक घटनानां पूर्वाभासस्य सूक्ष्मेक्षिका, मन्ये अद्यतनीयवनस्पतिशास्त्रे सुदुर्लभा अचिन्त्या च । परम् बृहत्संहितायाः[५] एकोनत्रिंशत्तमाध्याये अस्मिन् विषये सुस्पष्टं विवेचितम् । दिङ्मात्रमत्र कानिचन तथ्यानि निर्दिश्यन्ते । तद्यथा— शालवृक्षस्य पुष्पफलवृद्ध्या कलमशालीनां, रक्ताशोकेन रक्तधान्यानां, वटेन यवानां, तिन्दुकेन षष्टिकानां अश्वत्थेन सर्वधान्यानां वृद्धिर्भवति ।[६] जम्बूभिस्तिला माषाः, मधुकैः गोधूमाः, अतिमुक्तकुन्दपुष्पैः कार्पासः, वदरीभिः कुलत्थः, करञ्जपुष्पैः मुद्गवृद्धिश्च अनुमीयते । वेतसपुष्पैः अतसी पलाशकुसुमैः कोतवा वृद्धिर्ज्ञायते । तिलकेन शंखमौक्तिकानां वृद्धिः भवति ।[७] पलाशफलैः वृष्टिज्ञानम् अस्माभिः बहुधा परीक्षितम् । तथाहि । पलाशफलेषु त्रीणि बीजानि प्रायेण भवन्ति यदि च तानि तीण्यपि बीजानि पुष्टानि पूर्णवर्षर्तौ वृष्टि र्भवति । आद्यम् आद्यां मध्यं मध्यां अन्त्यं पुष्टं वीजं च अन्त्यवृष्टिं द्योतयति । वृष्टि विज्ञानाय इदम् असंदिग्धसाधनम् ।

---

१. काश्यपः मूलानां मिश्रणं वन्यप्राणीनां सक्रमणं चापि रोगकारणं मन्यते ।
२. वही ५५/१५
३. फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः ।
   श्रृतशीतपयःसेकः फलपुष्पसमृद्धये ॥ ५५/१६
४. वही ५५/१७-१८
५. फलकुसुमसम्प्रवृद्धिं वनस्पतीनां विलोक्य विज्ञेयम् ।
   सुलभत्वं द्रव्याणां निष्पत्तिश्चापि सस्यानाम् ॥ २९/१
६. बृहत्संहिता. २९/२-३
७. बृहत्संहिता-२९/४-५

हस्तिकर्णफल पुष्पवृद्धिः हस्तीनां, अश्वकर्णवृद्धिः अश्वानां, पाटलाभिः गवां, कदलीभिः अजाविकावृद्धिश्च विज्ञायते ।[१]

[२]वनस्पतिभिः धातुरत्नादीनां वृद्धिरपि ज्ञायते । चम्पककुसुमैः कनकस्य, बन्धुजीवेन विद्रुमसम्पदः, कुरवक वृद्धया वज्रस्य नन्दिकावर्तनेन च वैदूर्यमणेः वृद्धिरुपलक्ष्यते ।

[३]सिन्धुवासवृद्ध्या मौक्तिकं कुसुम्भेन केशरवृद्धिश्च उपलक्ष्यते । दूर्वाकुशकुसुमाभ्यां भिक्षुवृद्धि रुपलक्ष्यते ।[४]

आम्राणां वृद्धिः मनुष्याणां कुशलं द्योतयति । एतच्चापि बहुधा परीक्षितम् आम्रवृद्धौ सस्यवृद्धिः मनुष्याणां कुशलं क्षेमञ्च दृष्टौ तदभावे तदभावः । भल्लातकवृद्धिः भयंकरी । पीलुवृद्धया आरोग्यम्, खदिरशमीभ्यां दुर्भिक्षम् अर्जुनपुष्पफलैश्च सुवृष्टिः सुज्ञायते ।[५]

यदा च वृक्षवनस्पतिलतानां पत्राणि स्निग्धानि निश्छिद्राणि च दृश्यन्ते तदा सुवृष्टिः । रूश्छिद्रैश्च अल्पमभ्भः प्रदिष्टम् ।[६]

एवं विविधवृक्षवनस्पतीनां विविधप्राकृतिक घटनानां सस्यवृद्धिनाशस्य सुवृष्टि-अनावृष्टि-सुकाल दुष्कालादीनां ज्ञानम् नूनम् सुमहत् विज्ञानम् गन्वेषणं वा विद्यते । नैतत् कल्पना प्रसूतं परं बहुधा प्रकृतौ एताः घटनाः प्रत्यक्षीक्रियन्ते ।

तत्तद्वृक्षाणां पुष्पफलवृद्धिः कथं अन्याभिः घटानाभिः संबद्धा, कश्चात्र हेतुः एतत्सर्वं गवेषणीयम् ।

चत्वारिंशत्तमाध्याये विविधग्रहयोगानुसारं धान्यानां वृद्धिविनाशादिविषयः प्रपञ्चितः । ग्रहगत्यादिभिः धान्यादिशस्यानाम् उपचयापचयज्ञानं नूनम् महत्वाधायकम् ।

अत्र एकोनषष्ठितमेऽध्याये वृक्षाणां गुणावगुणविज्ञानं तेषां शुभाशुभकरत्वं विनिर्दिष्टम् । वृक्षाणां छेद्याछेद्यत्वं च चर्चितम् ।

एवं बृहत्संहितायां वनस्पतीनाम् आरोपणविधिः वृक्षारोपणकालः सद्यः वृक्षोत्पत्तिप्रकारः वृक्षाणां रोगदूरीकरणोपायाः विशिष्टदोहदप्रयोगः विशिष्टगुणयुक्तफलप्राप्तिविधिः वनस्पतीनां पुष्पफलादिवृद्धया विविध प्राकृतिकघटनानां पूर्वज्ञानम् विविधग्रहस्थित्यनुसारं धान्यानां समृद्धिः व्यृद्धिः वनस्पतीनां गुणदोषजातं सविस्तरं सुसूक्ष्मं विवेचितम् । अस्य यथावत् प्रयोगेण लोक उपकर्तव्यः । अस्य प्रचारप्रसारे संस्कृतज्ञैरस्माभिः बद्धपरिकरै र्भाव्यम् । इति शम् ।

---

१. बृहत्संहिता २५/७

२. तदेन-२९/८

३. तदेव-२५/३

४. ख-२५/१३

५. आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथारोग्यम् । खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः ॥ २९/२१

६. तदेव २९/१४

